TRIVANDRUM SANSKRIT SERIES
No. CXXXIX.
Śrī Citrodayamañjarī
No. XXVIII.

THE

# PṚAKRIYĀSARVASVA

OF

Śrī Nārāyaṇa Bhaṭṭa
with the commentary
OF
K. SĀMBAŚIVA ŚĀSTRI

Part II.

EDITED BY
K. SĀMBAŚIVA ŚĀSTRĪ,
*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1938.

*(All Rights Reserved.)*

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १३९.

श्रीचित्रोदयमञ्जरी

ग्रन्थाङ्कः २८.

श्रीनारायणभट्टप्रणीतं

# प्रक्रियासर्वस्वं

के. साम्बशिवशास्त्रिप्रणीतया

सञ्चिकाख्यया व्याख्यया

समेतम्।

द्वितीयः सम्पुटः।

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम्।

तच्च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम्।

कोलम्बाब्दाः १११३. क्रैस्ताब्दाः १९३८.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः।
स्वातिज्योतिरिवोदितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका।
उत्फुल्लसुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम्॥

के. साम्बशिवशास्त्री.

# PREFACE.

This is the second part of Prakriyāsarvasva with commentary. The commentary on the first part being incomplete, extending as it does only up to a portion of Kṛtkhaṇḍa, I am publishing this part with my commentary, Sañcika, on the remaining portion of that Khaṇḍa in conformity with the resolution of the Advisory Board on the subject.

The gloss obtained and appended to this volume as the wholesome outcome of continuous search is a veritable ornament to it. Though small in size it is remarkable for its elegance and utility suggestive of the intrinsic efficacy of medicated pills. Its author is Kerala Varma Valia Koil Tampurān, the renowned recipient of many honorific titles such as Keraḷakālidāsa etc., who flourished between 1844 and 1914 A. D.

The excellencies of the work will become *prima facie* evident from the facts that its composition, superb and inimitable transcription in the author's own hand and dedication to H. H. Āyilliam Tirunāḷ Mahārāja won royal pleasure and clemency which stood the author in good stead in his timely emancipation from an accidental but extreme peril. The dedicatory verse composed on that occasion is quoted below :—

"यस्योच्चैर्दययैव दुर्गतिमयस्तीर्णो मयार्णोनिधि-
स्तूर्णं पूर्णमनोरथेन च पुनर्लब्धा मतिः श्रायसी ।
तस्य श्रीकुलशेखरस्य विदुषां पत्युर्विशाखेशितु-
र्भक्त्या न्यस्तमिदं स्वहस्तलिखितं पादाब्जयोः पुस्तकम् ॥"

The following verses written by Keraḷavarmadeva, epitomising historical facts and proclaiming the unparalleled celebrity of the work not only disclose its transcription in his own hand but also throw light on the great merits of the Prakriyāsarvasva of Melputtūr Nārāyaṇan Bhaṭṭatiri :—

"भूखण्डे भृगुपुङ्गवस्रुवभयापक्रान्तपाथोनिधौ
नावाक्षेत्रपवित्रितोपरिनवग्रामे निलायास्तटे ।
श्रीनारायणभट्ट इत्यभिहितः श्रीमातृदत्ताख्यया
विख्यातस्य विपश्चितोऽवनिसुरस्याभूदभिज्ञः सुतः ॥

यः साक्षाद् भुजगेन्द्र एव भगवान् भूलोकभूः कीर्तितो
वेत्ता शास्त्रचतुष्टयस्य कविलोकोत्तंसमुक्तामणिः ।
धातूदाहृतिकाव्यचम्पुपटलीनारायणीयाभिध-
श्रीमद्भागवतार्थसङ्ग्रहमयस्तोत्रादिकग्रन्थकृत् ॥

यः पृष्टो गगनापगाधिपतिना श्रीदेवनारायण-
क्षोणीदेववरेण "धर्मतनयः किं सत्यवाचोऽपि सन् ।
पाञ्चालीवरणोत्सवेऽनृतमुवाचे"ति ब्रवीति स्म तं
नासौ कैतवमूचिवान् कच्चिददो वाक्यं तदाकर्ण्यताम् ॥

"धर्मात् ख्याततमे द्विजाधिपकुले जातोऽहमेषा च मे
माता पावनजन्मतामभिवहन् नन्वेष मे सोदरः ।
किन्त्वाखण्डलसत्प्रमोदजनको भ्राता ममायं परो
नासत्योदितमत्र विद्धि सहजद्वन्द्वं मयैतावपि ॥"

तच्छ्रुत्वा रसिकाग्रणीः स धरणीवृन्दारकग्रामणी-
र्णीयस्तमरामणीयकमदाद् यस्मै मणीकङ्कणम् ॥
यस्यावद्यविमुक्तसूक्तलहरीपीयूषपारम्परीं
स्वादंस्वादमसीमसौख्यजलधौ खेलन्त्यमी केरलाः ॥

यस्सर्वस्वमुखस्थमङ्गलदलं भट्टोजियज्वा कृतो-
ऽप्याकर्ण्याह स केवलोज्ज्वलमशास्त्रारम्भयुक्तं पुरा ।
श्रुत्वैवानुपदं तदुत्तरदलं सम्यक् तदूचेऽखिलं
यस्यात्यद्भुतधातुकाव्यमवलोक्यासीद् दिदृक्षुश्च यम् ॥

यद्वीक्षाकुतुकोत्तरङ्गहृदयो धीरस्ततः कौमुदी-
कारः केरलमण्डलं प्रति किल प्रस्थाय मध्येपथम् ।
श्रुत्वा यस्य परासुतां निववृते यद्वर्जितां तां दिशं
गत्वा किं क्रियतामिति प्रतिहतोत्साहः स्वगेहं प्रति ॥

कोलम्बे नयनग्रहाश्वगणिते शब्दागमप्रक्रिया-
सर्वस्वं स मनीषिणामचरमः षष्ट्या दिनैर्निर्ममे ।
सूत्रार्थैः सहितं क्वचित् क्वचिदपि स्पष्टीकृतं टिप्पणै-
स्तत् संशोध्य लिखामि साहसमिदं सन्तः सहन्तां मम ॥"

The reiteration of these facts here is superfluous inasmuch as they have gained wide currency and popularity.

The commentary, Sañcika, marks an innovation in the light of its aim at compendious explication of the text, evincing all peculiarities of etymological formation by copious but appropriate illustrations culled from the productions of eminent poets. I place this edition before the enlightened public with the ardent hope that I will be fortunate in bringing to light the remaining parts of the commentary as well.

Trivandrum,
22-12-1113.

K. SĀMBAŚIVAŚĀSTRI.

श्री

# अवतारिका ।

द्वितीयोऽयं भागः प्रक्रियासर्वस्वस्य व्याख्यया समेतस्य । यद्यपि भूयांस उत्तरे भागाः शिष्यन्ते, तथापि कयाचन व्याख्यया कृत्स्नखण्डैकदेशमात्रव्यापिन्या समुपक्रान्तप्रसाधनं पूर्वभागमनु समवशिष्टोऽपि कृत्स्नखण्डीयो भागः पूरणीय इत्युपदेशकपरिषन्निश्चयानुरोधेन मया विरचितया सञ्चिकाख्यया व्याख्यया सहितोऽयं द्वितीयो भागस्तावदवधिकः सद्यः प्रसाध्य प्रकाश्यते । बहोः कालादारभ्य क्रियमाणस्य चिरायान्वेषणश्रमस्य फलमिवोपाहरता दैवेन समुपलम्भिता कापि टिप्पणी चात्र समायोजिता भूषणायते । आकृत्या लघ्वी च वीर्यसारसम्पुटितेव मधुरा गुलिका सेयं महत उपकाराय जिज्ञासमानानां सम्पद्यते । अस्याश्च टिप्पण्याः कर्तारः सुप्रसिद्धाः केरलकालिदासादिबहुबिरुदविभूषिताः १८४४–१९१४ क्रिस्तुवर्षजीविनः केरलवर्मदेवाः । यादृच्छिकमपि महदत्याहितं स्वविरचितया टिप्पण्या समायोजितस्य प्रक्रियासर्वस्वस्य स्वहस्तलिखितप्रसाधितस्य समर्पणेन प्रसन्नस्य महोन्नतमहामहिमश्रीविशाखमहाराजस्य करुणया परिहृतवतामेषां चर्या स्फोरयति तावद्वैभवमस्य सर्वस्वस्य । अयं च तदात्वे तैः सन्निधापितः समर्पणश्लोकः —

"यस्योच्चैर्दययैव दुर्गतिमयस्तीर्णो मयार्णोनिधि-
स्तूर्णं पूर्णमनोरथेन च पुनर्लब्धा गतिः श्रायसी ।
तस्य श्रीकुलशेखरस्य विदुषां पत्युर्विशाखेशितु-
र्भक्त्या न्यस्तमिदं स्वहस्तलिखितं पादाब्जयोः पुस्तकम् ॥"

श्रीमन्नारायणभट्टपादमुनिप्रणीतस्य प्रक्रियासर्वस्वस्य महिमानमसीमानं गायन्तस्तस्य स्वकृतटिप्पणेन लेखनं श्लोकैरित्थं ते केरलवर्मदेवा उपश्लोकयन्ति—

"भूखण्डे भृगुपुङ्गवस्रुवभयापक्रान्तपाथोनिधौ
नावाक्षेत्रपवित्रितोपरिनवग्रामे निलायास्तटे ।
श्रीनारायणभट्ट इत्यभिहितः श्रीमातृदत्ताख्यया
विख्यातस्य विपश्चितोऽवनिसुरस्याभूदभिज्ञः सुतः ॥
यः साक्षाद् भुजगेन्द्र एव भगवान् भूलोकभूः कीर्तितो
वेत्ता शास्त्रचतुष्टयस्य कविलोकोत्तंसमुक्तामणिः ।

धातुदाहृतिकाव्यचम्पुपटलीनारायणीयाभिध-
श्रीमद्भागवतार्थसङ्ग्रहमयस्तोत्रादिकग्रन्थकृत् ॥
यः पृष्टो गगनापगाधिपतिना श्रीदेवनारायण-
क्षोणीदेववरेण "धर्मतनयः किं सत्यवचोऽपि सन् ।
पाञ्चालीवरणोत्सवेऽनृतमुवाचे"ति ब्रवीति स्म तं
नासौ कैतवमूचिवान् कचिददो वाक्यं तदाकर्ण्यताम् ॥
"धर्मात् ख्याततमे द्विजाधिपकुले जातोऽहमेषा च मे
माता पावनजन्मतामभिवहन् नन्वेष मे सोदरः ।
किञ्चाखण्डलसत्प्रमोदजनको भ्राता ममायं परो
नासत्योदितमत्र विद्धि सहजद्वन्द्वं ममैतावपि ॥"
तच्छ्रुत्वा रसिकाग्रणीः स धरणीवृन्दारकग्रामणी-
र्गाणीयस्तमरामणीयकमदाद् यस्मै मणीकङ्कणम् ।
यस्यानघविमुक्तसूक्तलहरीपीयूषपारम्परीं
स्वादंस्वादमसीमसौख्यजलधौ खेलन्त्यमी केरलाः ॥
यत्सर्वस्वमुखस्थमङ्गलदलं भट्टोजियज्वा कुतो-
ऽप्याकर्ण्याह स केवलोज्ज्वलमशास्त्रारम्भयुक्तं पुरा ।
श्रुत्वैवानुपदं तदुत्तरदलं सम्यक् तदूचेऽखिलं
यस्यात्यद्भुतधातुकाव्यमक्लोक्यासीद् विहस्तुष्टचेतसम् ॥
तद्दीक्षाकुतुकोत्तरङ्गहृदयो धीरस्ततः कौमुदी-
कारः केरलमण्डलं प्रति किल प्रस्थाय मध्येपथम् ।
श्रुत्वा यस्य परासुतां निववृते यद्वर्जितां तां दिशं
गत्वा किं क्रियतामिति प्रतिहतोत्साहः स्वगेहं प्रति ॥
कोळम्बे नयनग्रहाश्वगणिते शब्दागमप्रक्रिया-
सर्वस्वं स मनीषिणामचरमः षष्ट्या दिनैर्निर्ममे ।
सूत्राङ्कैः सहितं कचित् कचिदपि स्पष्टीकृतं टिप्पणै-
स्तत् संशोध्य लिखामि साहसमिदं सन्तः सहन्तां मम ॥"

एभिः पद्यैरेव चरितसुगन्धिभिः सर्वस्वकारस्य सर्वस्वस्य चानितरसाधारणः प्रथाविशेषः परिकीर्तितः । अन्यदन्यच्च भट्टपादचरितं सर्वतः प्रसरद् न पुनः

पल्लव्यते। मदीया च व्याख्या नाम्ना सञ्जिका अपेक्षिताधिकविवरणक्लेशमद-दाना महाकवीनामुदाहरणैर्यावत्सम्भवं प्रक्रियामूषिकायां स्फुटीकृतस्य शब्दस्य समुचितमुपयोगं प्रदर्शयन्ती कमपि नवीनं पन्थानमाश्रयति। दैवादस्य सर्व-स्वस्योत्तरानपि भागान् प्रपूर्य प्रसाधनाय भवेयमहं कृतभागधेय इति प्रति-यन् सद्योऽमुं द्वितीयं भागमवतारयामि ॥

अनन्तशयनम्,
२२-१२-११३.

के. साम्बशिवशास्त्री.

# विषयानुक्रमणी ।

॥ श्रीः ॥

श्रीनारायणभट्टप्रणीतं

# प्रक्रियासर्वस्वं

साम्बशिवशास्त्रिप्रणीतया

सञ्चिकाख्यया व्याख्यया

समेतम् ।

(द्वितीयो भागः ।)

मनः (३. २. ८२)

सुबन्तपूर्वान्मन्यतेर्णिनिः स्यात् । कृष्णं शत्रुं मन्यत इति शत्रुमानी कृष्णस्य कंसः ॥

---

स्फुरतु पुरतोऽनवरतं शब्दाधिष्ठानमक्षरं ज्योतिः ।
यद्भूषणमणिकिरणैः स्पष्टमभासिष्ट तन्महाभाष्यम् ॥ १ ॥

स्मरतु हृदयं मुरारेर्मणिकिङ्किणिमञ्जुशिञ्जितानुगतम् ।
अनुगोपिकमनुगीतं मुरलीसरलानुनादमधुरतरम् ॥ २ ॥

श्रीव्याघ्रपुराभिजनं श्रीवञ्चीन्द्राश्रयैकजीवातुम् ।
श्रीकृष्णाख्यं पितरं वन्दे शब्दागमाब्धिनिष्णातम् ॥ ३ ॥

श्रीमद्विशाखनृपतेः श्रीकेरलवर्मणश्च पर्पपतेः ।
करुणामसृणं साध्यं यत्पाण्डित्यप्रतिष्ठया सफलम् ॥ ४ ॥

तस्यात्मजोऽस्मि साम्बो विद्याधिगमाय पितरमनवसरे ।
स्वर्गतमनवाप्य बत श्रीनारायणकृपाबलादवुधम् ॥ ५ ॥

G. P. T. 1394. 500. 26-11-111. B

## आत्ममाने खश्च (३. २. ८३)

**आत्मविषये मननेऽर्थे मनः खश् णिनिश्च स्यात्। दिवादित्वा-च्छ्यन्। मन् य अ, पररूपं मन्य, खित्वान्मुम्। आत्मानं बुधं म-न्यत इति बुधंमन्यः बुधमानी। 'खित्यनव्ययस्य' (६-३-६६) इति ह्रस्वः। सुन्दरिंमन्या स्त्री। अव्ययस्य तु न ह्रस्वमुमौ। दोषामन्य-महः॥**

---

पुरुकरुणावैभवतो नारायणगुरुवरात् पितुः शिष्यात्।
पारम्पर्यावाप्तः शाब्दीं विद्यामिहास्मि जीवामि॥ ६॥
उन्नतमहामहिम्नः श्रीवञ्चिक्षोणिमद्य पालयतः।
श्रीचित्रोदयनृपतेः कृपया परिपाल्य पोष्यमाणेऽस्मिन्॥ ७॥
प्राचीनग्रन्थानां मुद्रापणकार्यधिष्ण्यमाध्यक्ष्यम्।
गमितेऽभ्यस्तगुणनिकासम्पादनधन्यतास्ति काप्यन्या॥ ८॥
तत्तादृशसन्दर्भे पण्डितसदसा नियोजितः करवै।
भट्टश्रीनारायणसर्वस्वस्यैष सञ्चिकां काञ्चित्॥ ९॥
या सा प्रकाशिकाख्या विवृतिरविज्ञातकर्तृनामा ताम्।
कृत्खण्डांशावधिकामनुगच्छन्त्यस्तु सञ्चिका पूर्णा॥ १०॥

**मन्यतेरि**ति। उत्तरसूत्रे खशि श्यन्नन्तस्यैव विवक्षणाद् बहुलग्रहणा-नुवृत्त्येह मन इति तानादिकस्य ग्रहणं निवार्यते। मनः सकर्मकतयोपपदं सुबन्तं कर्मैव सम्भवि, प्रत्यासत्तेः। अतो विगृह्णाति–**शत्रुं मन्यत इ**ति। कृष्ण-भक्तस्य कवेर्यावत्सम्भवं सर्वमप्युदाहरणजातं तत्परतां नेतुमुत्साहेन **कृष्णमि**ति। **शत्रुमानी**। वृत्त्या वस्तुतोऽशत्रावसाम्प्रतमिदं शत्रुत्वमननमिति ध्वन्यते॥ **आत्ममान** इति। सूत्रे आत्मनो मान इत्यर्थे कर्मणि षष्ठ्या समासेन आत्ममान इति स्थितम्। प्रत्ययार्थतयैव कर्तुः पृथगवस्थानादात्मग्रहणसामर्थ्याच्च आत्मन इति कर्मणि षष्ठी ग्रहीतव्या। तदाह — **आत्मविषय इ**ति। पूर्वोक्तरीत्या श्यन्नन्तस्यैव मन इह विवक्षणाद् यकि श्यनि च रूपे स्वरे वा विशेषाभावात् 'कर्मकर्तरि खश् चेति वक्तव्यम्' इति वार्त्तिकं भाष्ये प्रत्याख्यातम्। **ख-शि**ति। शित्त्वं विकरणार्थम्। **आत्मानं बुधमि**ति। विशेषकथनस्यैव वृत्ति-विषयत्वमिति यावत्। अत्रायं विवेको णिनिखशोः — आत्ममान एव खश्, णिनिरुभयोः। अनेन बुधमानी कृष्णस्य विदुरः इत्याद्यपि विवरणं सम्भवि।

## इच एकाचोऽम्प्रत्ययवच्च (६. ३. ६८)

अमिति द्विरावर्त्यः। इजन्तस्यैकाचः खिदन्ते परेपदे[1]ऽम् स्यात्। स चाम्प्रत्ययवत् स्यात् । द्वितीयैकवचनस्यामः कार्याण्यत्र स्युरित्यर्थः । द्योशब्दे,

## औतोऽम्शसोः (६. १. ९३)

आ ओत इति च्छेदः[2] । ओदन्तादमि शसि च परे पूर्वपरयोः सहात्वं स्यात् । द्यांमन्या भूमिः । श्रियंमन्येत्यादि ।

क्लीबे त्वत्रान्यलिङ्गोऽपि क्लीबं स्यादिति भाष्यकृत् ।
तेन क्लीबोदितो ह्रस्वोऽप्यमोऽम्प्रत्ययवत्त्वतः ॥
स्वमोरित्यादिना लुक् च श्रिमन्यं वनिताकुलम् ।
इति त्रैकाल्यतुल्यानामुल्लासोऽयं कृतां कृतः ॥

---

अत्रोदाहरणानि —

"रामभुच्चैरुपालब्ध शूरमानी कपिप्रभुः ।
व्रणवेदनया ग्लायन् साधुम्मन्यमसाधुवत् ॥"

इति भट्टिः ।

"भव्यमानी सुभव्योऽपि परेषामेव यज्वनः ।
शूरमान्याढ्यमान्यार्यम्मन्यो वा जांतु न त्वभूत् ॥"

इति सुभद्राहरणकर्ता नारायणः ॥ द्विरावर्त्य इति । तन्त्रेण निर्देशादिति शेषः । अम्प्रत्ययवादिति । अतिदेशे प्रयोजनमात्वपूर्वसवर्णगुणेयङुवङादेशाः । आत्वे—गाम्मन्यः । पूर्वसवर्णे—स्त्रीम्मन्यः । गुणे—नरम्मन्यः । इयङुवङोः—श्रियम्मन्यः, भुवम्मन्यः । द्वितीयैकवचनस्याम इति । सुबन्तप्रकृत्यर्थस्य कर्मत्वमर्थोपाधिः । 'औतोऽशसोरि'त्यत्र शस्साहचर्यं शब्दोपाधिश्च निमित्तमिह वक्तव्यम् ॥ आमि शसि चेति । द्वाविमौ 'वा सुप्यापिशलेरि'त्यतः सुपीत्यनुवृत्तेः साहचर्याच्च द्वितीयाविभक्तिप्रत्ययौ । अतो न नपुंसकप्रथमामस्तद्धितशसश्च ग्रहणम् । अन्यलिङ्गोऽपि क्लीबं स्यादितीति । यथा प्रष्ठादयः परित्यक्तस्वलिङ्गाः पुंयोगात् स्त्रियां वर्तन्ते प्रष्ठी गणिकेत्यादि, तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्तत इति भावः । श्रिमन्यमिति । इहा-

---

१. 'रेऽम्', २. 'पदम् ।' क. ख. पाठः.

भूते (३. २. ८४)

इतः परं लटः प्राग् भूतेऽर्थे प्रत्ययाः ॥

करणे यजः (३. २. ८५)

करणपूर्वाद् यजेर्भूतेऽर्थे णिनिः स्यात् । अग्निष्टोमेनेष्टवानग्निष्टोमयाजी ॥

कर्मणि हनः (३. २. ८६)

कर्मपूर्वाद्धनेर्भूते णिनिः स्यात् । कुत्सिते चेति वाच्यम् । गोघाती । मातृघाती ॥

---

न्तरङ्गपरिभाषाप्रवृत्तौ 'स्वमेर'ति लुगभावात् श्रियम्मन्यमिति केचित् । परन्तप इत्यादावनुस्वारसिद्धये उत्तरपदाधिकारेऽन्तरङ्गपरिभाषाया अप्रवृत्तिमभ्युपयतां लुक्प्रवृत्त्या श्रिमन्यमिति च न्याय्यम् । अत्र शब्दरत्नकारः अन्तरङ्गपरिभाषाया उत्तरपदाधिकारे प्रवृत्त्यभावनिरूपणपरं भाष्यं पूर्वपक्षिण इत्यभ्युपेत्य श्रियम्मन्यमिति रूपे मतिं कुरुते । त्रैकाल्यतुल्यानां सार्वकालिकानामित्यर्थः । तेन क्वचित् कालसम्बन्धविरहेऽपि केवलताच्छीलिकादौ न हानिः ॥ भूत इति । अधिकारोऽयं 'वर्तमाने लडि'त्येतदनभिव्याप्य । अत एवाह — लटः प्रागिति । प्रसिद्धेर्भूत इह कालो विवक्षितः । तस्य चाधिक्रियमाणेन धातोरित्यनेन क्रियाद्वारा सम्बन्धः । धातुवाच्यायां क्रियायां भूतायां वक्ष्यमाणाः प्रत्यया भवन्तीति यावत् । भूत इति किम् । कुमारघाती, शीर्षघाती, आखुहा बिडाल इत्यादयो भविष्यद्वर्तमानयोरिव भूतेऽपि प्रसजेयुः ॥ करणपूर्वादिति । करणे उपपदे इति यावत् । णिनिरिति । 'सुप्यजातौ' इति णिनिः । प्रकृतत्वादनुवृत्तिव्याप्त्या च णिनिरेवेह सम्बध्यते । 'आत्ममाने खश् चे'ति खश् तु णिनिसमुच्चायकः कश्चिद् विशेषविधिः । सत्येवं स्वरितत्वप्रतिज्ञानात् खश्निवृत्त्यै न प्रयतितव्यम् । अग्निष्टोमेनेष्टवानिति । इदं णिन्यन्तस्य वृत्तस्यार्थावबोधकं विग्रहवाक्यम् । अग्निष्टोमयाजीति । फलभावनायामग्निष्टोमस्य करणत्वम् । एवं सोमयाजीत्यपि । किन्तु तत्र सोमस्य लताविशेषरूपसाधनत्वात् करणत्वं विशेषः । तथाचोदाहरणानि — "मृषासि त्वं हविर्याजी" इति भट्टिः । "दूनोऽग्निष्टोमयाजी स" इति सुभद्राहरणकर्ता नारायणः । "अश्वमेधयाजिनोऽभूवंस्त्वय्यप्रसन्ने कुतो जनाः" इति रावणार्जुनीयम् ॥ वाच्यमिति । शब्द-

## ब्रह्मभ्रूणवृत्रेषु क्विप् (३. २. ८७)

**एषूपपदेषु हनेर्भूते क्विबेव । अत्रैवकारश्चतुर्धा योज्यः । ब्रह्माणं हतवान् ब्रह्महा इत्यादि । कंसहेत्यादौ तु भूतकालाविवक्षया 'क्विप् च' (३-२-७६) इति क्विप् ॥**

---

शक्त्यैव गोघातीत्यादेः कुत्सनद्योतनादिदं फलितार्थकथनम् । अतोऽकुत्सिते चोरं हतवानित्यादावस्य न प्रवृत्तिः । तथाच प्रयोगाः—"अन्यन्यासक्तघातित्वाद्" इति भट्टिः । "न साधुघाती गोघाती" इति सुभद्राहरणम् । "मातृघातिनोऽपि चाशुद्धिं नैवागतास्त्वामुपगताः" इति रावणार्जुनीये ॥ **चतुर्धा योज्य** इति । 'क्विप् चे'ति सर्वधातुभ्यो विहितक्विपैव निर्वाहे सूत्रमिदं चतुर्धा नियमार्थमित्यभिसन्धिः । चतुर्धा योजनं च सर्वस्वकारवाक्य एव सुकरम् । यथा—एषूपपदेष्वेव, हनेरेव, भूत एव, क्विबेवेति । अत्र व्यावर्त्यानि—पुरुषं हतवान्, ब्रह्माधीतवान्, ब्रह्माणं हन्ति हनिष्यति वा। चतुर्धा नियमयोजनं वृत्तिकारमतेन । भाष्ये तु—'ब्रह्मादिष्वेव हन्तेर्भूते क्विब् भवति । क्विबेव हन्तेर्भूते ब्रह्मादिष्वि'ति धातुनियमः कालनियमश्चाहतः न तृतीयो न वा चतुर्थः उपपदस्य वा प्रत्ययस्य वा । तथाचोक्तमुपाध्यायपादैः शेखरे—"श्रुत्युपस्थितोपपदप्रत्यययोरुपरोधापेक्षया प्रकरणलक्षणजघन्यप्रमाणोपस्थितधातुकालयोरेवोपरोधो न्याय्यः" इति । तेन ब्रह्माणं हन्ति, हनिष्यति वेत्यर्थे 'क्विप् चे'ति क्विब् भवत्येवेति तत्त्वम् । अत्र चोदाहरणानि—"ब्रह्मघ्नां पापसम्मितः" इति भट्टिः ।

"ब्रह्महा भ्रूणहापि वा ।
राष्ट्रे युधिष्ठिरस्यास्मिन् वार्त्रघ्न इव दृश्यते ॥"

इति सुभद्राहरणे ।

"त्वां ब्रह्महभ्रूणहनावुपेतौ मध्ये भवेतां प्रणिपत्य पूतौ ।
तथाश्वमेधेन विशुद्धदेहः स वृत्रहासीद् दिवि देवराजः ॥"

इति रावणार्जुनीयम् । **कंसहेति** । गृहीतेषूपपदेष्वनन्तर्भावाद् भगवति श्रीकृष्णे कंसहेति प्रयोगस्य कवितात्पर्यविषयत्वाच्चायं विचारः । शब्दस्वाभाव्यात् कंसं हतवति भगवति स्थितस्यास्य शब्दस्य 'क्विप् चे'त्यनेन क्विपमानेतुं भूतकालो न विवक्षितः । तदिदं 'बहुलं छन्दसी'त्युत्तरसूत्र-

**सुकर्मपापमन्त्रपुण्येषु कृञः (३. २. ८९)**

तुक् । शोभनं कृतवान् सुकृदित्यादि ॥

**सोमे सुञः (३. २. ९०)**

सोमं सुतवान् सोमसुत् ॥

**अग्नौ चेः (३. २. ९१)**

अग्निचित् ॥

**कर्मण्यग्न्याख्यायाम् (३. २. ९२)**

अग्निचयननाम्नि चेः कर्मार्थे क्विप् स्यात् । श्येन इव चीयते इति श्येनचित् । कङ्कचित् ॥

---

स्थस्य बहुलग्रहणस्येहापकर्षणात्, कंसस्य गृहीतानन्तर्भावेऽपि भूतकालमविवक्षित्वापि सुयोजम् । ब्रह्मादिष्वेव भूत एवेति नियमदिशान्येषूपपदेषु भूतभिन्नेऽपि सामान्यप्राप्तस्य क्विपोऽबाधादपि कंसहादिर्वर्तमानभविष्यतोः सिध्यति । आदिपदेन 'अरिहयोगविचक्षण' इत्यादिघटकारिहादयः सङ्ग्राह्याः ॥ सुकर्मेति । 'त्रिविधश्चात्र नियम इष्यत' इति काशिका । स च धातुनियमवर्जमुपपदकालप्रत्ययेषु भवति । धातुनियमाभावाद् अन्यत्राप्युपपदे 'क्विप् चे'ति सम्भवति । तेन भाष्यकृत्, शास्त्रकृत्, सूत्रकृत्, वार्तिककृदित्यादि सिध्यति । कालनियमात् कर्म कृतवानित्यत्राणा कर्मकार इति न । उपपदनियमान्मन्त्रमधीतवान् मन्त्राध्याय इत्यणेव । प्रत्ययनियमान्मन्त्रं करिष्यति करोति वेति विवक्षायामणेव । तुगिति । 'ह्रस्वस्य पिति कृति तुगि'त्यादिः । सुकृदित्यादीति । आदिना कर्मकृत्, पापकृत्, पुण्यकृद् इत्युदाहरणानि ग्राह्याणि ।

"पापकृत् सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः ।"

इति भट्टिः ।

"पुरोहितैरमात्यैश्च मन्त्रकृद्भिरुपासितः ।"

इति नारायणः ॥ कर्मणीति । आख्याग्रहणं रूढिबोधनाय । श्येन इव चितः श्येनचित् इति कौमुदी । भूत इत्यधिकारात् चीयत इति लट् तु सामान्यग्रहणात् । श्येनचिदिति समुदायेनाग्न्याधारस्थलविशेष इष्टकाचय उच्यते । एवं कङ्कचित् ।

---

१. 'ते श्ये' क. ख. पाठः.

## कर्मणीनि विक्रियः (३. २. ९३)

कर्मपूर्वाद् विक्रीञ इनिः स्यात् । मांसविक्रयी । कुत्सित एवायम् । धान्यविक्रायोऽन्यः ॥

## दृशेः क्वनिप् (३. २. ९४)

कर्मपूर्वादेव । हरिं दृष्टवान् हरिदृश्वा ॥

## राजनि युधिकृञः (३. २. ९५)

युधेर्ण्यर्थवृत्तेरेव । साहाय्याद् वैरकरणाद् वा स्वीयमन्यं वा नृपं योधितवान् राजयुध्वा मन्त्री । प्रागसत्कल्पं स्वशक्त्या नृपं कृतवान् राजकृत्वा ॥

## सहे च (३. २. ९६)

युधिकृञोः क्वनिप् । सहयुध्वा सहकृत्वा ॥

---

"भान्ति सोमसुतामग्निचितां श्येनचिदादिभिः ।
अग्निभिर्भूमयोऽग्नत्वे रचितैः कुशलैर्द्विजैः ॥"

इति सुभद्राहरणम् ॥ कुत्सित एवायमिति । 'कर्मणि कुत्सिते' इति भाष्यादिति शेषः । शास्त्रनिषिद्धानां सोमघृतरसादीनां विक्रयः कुत्सनावह इति तत्र भवति । सोमविक्रयी रसविक्रयीत्यादीन्यूह्यानि । धान्येति । अत्र कुत्साविरहान्नेनिः, किन्त्वणेव । अन्यः अकुत्सितः ।

"घृतविक्रयिणां वित्तैस्तैलविक्रयिणामपि ।
अन्येषामपि दण्ड्यानां नृपः कोशान् विवर्धयेत् ॥"

अत्र दण्ड्यानामिति विशेषणात् कुत्सा द्योतिता ॥ हरिं दृष्टवानिति । एवं पारं दृष्टवान् पारदृश्वेत्यादि । भूत इत्यधिकाराद् दृष्टवानिति विग्रहः । 'अन्येभ्योऽपि दृश्यन्त' इति क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तरनिवृत्त्यर्थमिति काशिका । अनेन कालान्तरे अन्येभ्य इति भवत्येव । अतः "विश्वदृश्वनयना वयमेवे"ति श्रीहर्षप्रयोगे विश्वं पश्यन्ति विश्वदृश्वानीति विग्रहो नायुक्तः । पारदर्शीत्यादयः प्रयोगा अत एव साधवो बोध्याः ॥ ण्यर्थवृत्तेरेवेति । शुद्धस्याकर्मकतया कर्मोपपदमसम्भवीति ण्यर्थवृत्तिरिष्यते । ण्यर्थे सकर्मकत्वात् तत्सम्भवः । स्वशक्त्या नृपं कृतवानिति । करोतिरुत्पादनार्थः समभिव्याहृत एवमर्थविवरणानुकूलः । तादृशश्च राजकृत्वा

---

१. 'वेदम्' क. ख. पाठः.

सप्तम्यां जनेर्डः (३. २. ९७)

डित्त्वात् टिलोपः । सिन्धौ जातः सिन्धुजः ॥

पञ्चम्यामजातौ (३. २. ९८)

अजातिवाचिनि पञ्चम्यन्ते पूर्वे जनेर्डः । ज्ञानजः । विष्णुजः । जातौ स्वश्वाज्जातः ॥

उपसर्गे च संज्ञायाम् (३. २. ९९)

प्रादिपूर्वाज्जनेर्नाम्नि डः स्यात् । प्रजा ॥

अनौ कर्मणि (३. २. १००)

कर्मणि पूर्वेऽनुजनेर्डः स्यात् । राममनुजातो रामानुजः ॥

अन्येष्वपि दृश्यते (३. २. १०१)

उक्तादन्यत्रापि डो दृश्यते । अजः । द्विजः । जातावपि ब्राह्मणजः । क्षत्रियजः । अभिजाः परिजा वृक्षा इत्यनाम्न्यपि । अनुज इत्यनुपपदेऽपि । क्वचिद् धात्वन्तरेऽपि । भातीति भम् । वारि चरतीति वार्चो हंस इत्यादि च भोजेन निपातितम् । क्वचिदकर्तर्यपि । परितः खाता परिखेति खनेः कर्मणि इति ॥

---

चाणक्यादिः सुप्रसिद्धः ॥ सहे चेति । सहस्यासत्त्ववाचितया तेनोपपदं कर्मणा विशेष्यते । भूत इत्येव । सह योधितवान् कृतवांश्च सहयुध्वा, सहकृत्वा । युध्यन् कुर्वंश्च सहयोधी सहकारी च बोध्यः ॥ डित्त्वादिति । डित्त्वसामर्थ्यादभस्यापीत्याशयः । सिन्धुजः अश्वः । सिन्धुजा लक्ष्मीः ॥ अश्वाज्जात इति । जातिवाचकत्वादुपपदत्वमसम्भवि प्रत्ययोत्पत्तिं विहन्तीति वाक्यमेवोदाहरति ॥ राममनुजात इति । इह रामस्य कर्मत्वमनुद्योत्यानुरुध्यतिनिरूपितं बोध्यम् । रामानुजः कृष्णः ॥ अजः, द्विजः इति । न जायत इत्यजः । द्विर्जातो द्विजः । असप्तम्यामप्यभूतेऽपि डो भवतीत्याशयः । जातावपीति । पञ्चम्यामजातावित्यसिद्धेः । अन्येभ्योऽपि दृश्यत इति वार्तिकं मनसिकृत्योदाहरति—ब्राह्मणज इत्यादि । अनाम्न्यपीति । 'उपसर्गे च संज्ञायामि'त्यसिद्धेः । अनुपपदेऽपीति । 'अनौ कर्मणी'ति कर्मोपपदस्थल एव सम्भवात् । वार्चे इति । टिलोपेनारोऽपहारात् । कर्मणीति । वस्तुतस्तु सर्वोपाधिव्यभिचारार्थेना-

निष्ठा (३. २. १०२)

सर्वधातोर्भूतेऽर्थे निष्ठा स्यात् ॥

क्तक्तवतू निष्ठा (१. १. २६)

एतौ निष्ठाख्यौ[1] स्तः। तत्र क्तवतुः कर्तरि। उकावितौ। कित्त्वादगुणः। कृतवान्। क्तस्तु 'तयोरेव कृत्यक्तखलर्थाः' (३-४-७०) इति भावकर्मणोरेव। कृतः कटः। अकर्मकेभ्यो भावे। भूतमनेन। 'आदिकर्मणि निष्ठा वाच्या' (वा० ३-२-१०२)। आरम्भश्चासौ। तद्द्योतनाय क्वचित् प्रशब्दः। प्रभुक्तवान्। भोजनमारब्धवानित्यर्थः ॥

आदिकर्मणि क्तः कर्तरि च (३. ४. ७१)

आरम्भार्थे क्तस्तु कर्तरि भावकर्मणोश्च स्यात्।
प्रभुक्तो गोरसं कृष्णः प्रभुक्तोऽनेन गोरसः।
प्रक्रीडितो वने शौरिः प्रक्रीडितमिहामुना ॥

गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च (३. ४. ७२)

---

पिशब्देन सर्वमिदं सिद्धमित्याशयः। भोजेन वार्चादीनां निपातनं च तत्सिद्धस्यैव कश्चिद् भङ्ग्यन्तरानुवादः ॥ निष्ठाख्याविति। विहितयोराख्या, आख्यातयोर्विधानमित्यन्योन्याश्रयदोषो भाविसंज्ञाविज्ञानात् परिहर्तव्यः। 'स भूते भवति यस्योत्पन्नस्य निष्ठेति संज्ञा भवती'ति वृत्तिः। क्तवतुः कर्तरीति। 'कर्तरि कृदि'त्यादिः। आरम्भ इति। आदिशब्दार्थः। क्वचित् प्रशब्द इति। 'प्रोपाभ्यां समर्थाभ्याम्' इति सूत्रे प्रशब्दस्यारम्भार्थकत्वमाचार्यस्याभिमतम्। यस्मादुपेन तुल्यार्थता। तत्रैव सूत्रे 'यदानयोस्तुल्यार्थता आदिकर्मणी'ति वृत्तिः। 'प्रोपाभ्यां आरम्भ इत्येव सुवचमि'ति व्याख्यातारः ॥ प्रभुक्त इत्यादि। सकर्मकस्य कर्तरि कर्मणि च पूर्वार्धेन, अकर्मकस्य कर्तरि भावे चोत्तरार्धेन चोदाहरणसङ्ग्रहः। गोरसं कृष्ण इति। प्रभुक्त इत्यत्रत्येन क्तेन[2] कर्मणोऽनभिधानात् कर्तुरभिधानाच्च

---

१. ख्यौ। त', २. 'क्तस्तेन' ख. पाठः.

एभ्यः क्तः कर्तरि स्याद् यथार्हं भावकर्मणोश्च । शीङादेरक-र्मकत्वेन सिद्धावप्युपसर्गवशात् सकर्मकत्वे सिद्ध्यर्थमुक्तिः ।

गोपीं गतश्च मुदितस्तामाश्लिष्टस्तदङ्कमधिशयितः ।
काननमधिष्ठितोऽसौ निकुञ्जमध्यासितोऽच्युतो रेमे ॥

अनूषितोऽसौ दुग्धाब्धिमनुजातश्च वासवम् ।
आरूढो गरुडं विष्णुरनुजीर्णोऽयमिन्दिराम् ॥

तामनुप्राप्यैतावन्तं कालं स्थित इत्यर्थः । 'चकाराद् व्यवसित-प्रतिपन्नादिष्वपि कर्तरि क्त' इति वामनः । एवं कृष्णं नतोऽस्मी-त्यादि । भजेश्च भोजः । देहं विभक्तो हरः । भावकर्मणोस्तु कृष्णेन गता गोपी । मुदितमनेन । आश्लिष्टा सा इत्यादि ॥

क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः (३. ४. ७६)

ध्रौव्यार्थाः अकर्मकाः । तेभ्यो गतिभुक्त्यर्थेभ्यश्चाधिकरणे क्तः स्यात् । चकाराद् यथाप्राप्तं च ।

---

यथाक्रमं द्वितीया प्रथमा च कृता ॥ क्तः कर्तरि स्यादिति । आदिकर्मणीति सूत्रात् क्तः कर्तरीति चानुवर्तेते । भावकर्मणोश्चेति । चकाराद् यथाप्राप्तं चेत्यर्थेन भावकर्मणोरपि यथायथं क्तः । अत्रोभयेषां धातूनां क्तः कर्तरि विधीयते पठितानां केषाञ्चित् सकर्मकाणां समेषामकर्मकाणां च । तत्र शुद्धा इव गत्यर्थाः सोपसर्गाः श्लिषादयः सकर्मकाः इति तेषां कृते पृथग्ग्रहणमित्याह — शीङा-देरिति । तत्र गत्यादयः प्रकृत्योभयधर्माणः । यथा गतः कृष्णः, मधुरां गतः कृष्ण इत्यादि । नैवं भुजिभज्यादिः । तस्माद् वामनमतमवलम्ब्य समाधान-मुपक्रमते — चकारादित्यादिना । प्रतिपद्यतिनमत्यादीनां सकर्मकत्वादप्राप्तौ चिन्तनमिदम् । काशिकाकारस्तु — 'चकाराद् यथाप्राप्तं च भावकर्मणोरि'ति भावकर्मणोः क्तसङ्ग्रहणमेव चकारफलं पश्यति । उदाहरति च गतो ग्रामं देवदत्तः, गतो ग्रामो देवदत्तेन, गतं देवदत्तेन । ग्लानो भवान्, ग्लानं भव-तेत्यादि । कृष्णेन गता गोपीति । भावकर्मणोरित्युपक्रमेऽपि मुदितमनेनेति भावोदाहरणमर्थतोऽपि सम्पन्नं द्योतयन् कृष्णेन गतेति कर्तर्युदाहरणमादितः । आश्लिष्टा सा इति च मोदनफलत्वादाश्लेषस्य समुचितमनन्तरमुदाहरणं कर्मणि ॥ ध्रौव्यार्था अकर्मकाः इति । इदं स्वनिकायप्रसिद्ध्या । ध्रौव्यं स्थैर्यम् ।

कृष्णस्य क्रीडितां भूमिं नृत्तं च शयितं स्थलम् ।
यातानप्यशितान् देशान् मृगयन्ते स्म गोपिकाः ॥

भुक्ताः पीता अतिथय इत्यादौ तु कर्माविवक्षयाकर्मकत्वात् कर्तरि क्त इति सुभद्राहरणे ॥

नपुंसके भावे क्तः (३. ३. ११४)

लकारवत् साध्यभावे क्तः पूर्वोक्तो ह्यकर्मकात् ।
ल्युडादिवत् सिद्धभावे सर्वेभ्यः क्तोऽयमुच्यते ॥

यातं वीक्षितम् ॥

---

इदमुपलक्षणमकर्मकक्रियात्मककर्तृमात्रविश्रान्तव्यापारसामान्यस्य। अत आस्ते, तिष्ठति, वर्तते, शेत इत्यादयोऽकर्मका गृह्यन्ते ध्रौव्यार्थतयेति सूक्ष्मम् । यथाप्राप्तं चेति । ध्रौव्यार्थेभ्यः कर्तृभावाधिकरणेषु, गत्यर्थेभ्यः कर्तृकर्मभावाधिकरणेषु, प्रत्यवसानार्थेभ्यः कर्मभावाधिकरणेष्विति विवेकः । चकारात् सकर्मकस्यापि प्रत्यवसानार्थस्य कर्तरि क्तं स्वीकृत्य, आशित ओदनं देवदत्त इत्यादिप्रयोग आद्युदात्तत्वसाधनायाङ्गीक्रियते भाष्यप्रामाण्यात् । उदाह्रियते च काशिकायां भुक्त ओदनं देवदत्त इति च कर्तरि । कृष्णस्येति । पूर्वार्धेन ध्रौव्यार्थानामुत्तरार्धेन यथाक्रमं गत्यर्थप्रत्यवसानार्थयोश्चोदाहरणानि ।

"रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम् ।
प्रक्रान्तं च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् ॥"

इति भट्टिः । भुक्ताः पीता इति । काशिकायां मत्वर्थीयेनाकारेणोपपत्तिरुक्ता । भुक्तमेषामस्ति, पीतमेषामस्तीति । भाष्यकारास्तु — "कथं तर्हि कर्तृत्वं गम्यते । अकारो मत्वर्थीयः । विभक्तमेषामस्तीति विभक्ताः । पीतमेषामस्तीति पीताः । अथवा उत्तरपदलोपोऽत्र द्रष्टव्यः । विभक्तधनाः विभक्ताः । पीतोदकाः पीताः" इति वदन्ति । भोजश्च '[१]त्यर्थाकर्मकपिबतिभुजिभ्योऽधिकरणे च' इति स्वतन्त्रेण सूत्रेण भुक्ताः पीता इति कर्तर्यपि क्तमनुशास्ति । सत्येवं तृतीयेयं गतिः कर्माविवक्षया कर्तरि क्त इति । सर्वथा 'पीतप्रतिबद्धवत्सामि'ति कालिदासप्रयोगः सङ्गतः ॥ नपुंसक इति । इदं भावस्य सिद्धत्वद्योतनायापि ।

---

१. 'क्तः गत्य' ग. पाठः.

### ञीतः क्तः (३. २. १८७)

ञीद्भ्यो धातुभ्यो वर्तमान एव क्तः स्यात्। 'ञिभी भये'। भीतः॥

### मतिबुद्धिपूजार्थेभ्यश्च (३. २. १८८)

इच्छाज्ञानपूजार्थेभ्यश्च वर्तमान एव क्तः स्यात्। इष्टोऽयम्। इष्यमाण इत्यर्थः। एवमभिलषितः। ज्ञातः। पूजितः। चकारादन्येभ्योऽपि।

---

द्विविधो हि कृदभिहितो भावः साध्यः सिद्धश्च। आद्ये लिङ्गसङ्ख्याद्यनन्वयः लकारवाच्य इव। तत्र च विधीयतेऽकर्मकात् क्तः। कृष्णेन क्रीडितमित्युदाहरणम्। इह च दृश्यमाने नपुंसकैकवचने परिनिष्ठितत्वसम्पादनमात्रोपयोगिनी न स्वाभाविकीं साध्यतां भावस्यालं विहन्तुम्। 'अपदं न प्रयुञ्जीते'ति स्मृत्यानन्वितार्थकलिङ्गविभक्तिवचनापेक्षयानुवादकनपुंसकप्रथमैकवचनस्य न्याय्यत्वाच्च तथा प्रयोगः। 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इत्यभियुक्तवचनं प्रकाशनमित्यादिल्युडाद्यन्ते सफलम्। इह च नपुंसकप्रथमैकवचनदर्शनादौपचारिकं वा नेयम्। अथवा 'द्रव्यवत् प्रकाशत' इति वत्करणव्यावर्त्यं वा भवतु। द्वितीये च लिङ्गसङ्ख्याकारकाद्यन्वयो द्रव्यगुणयोरिव। सिद्धत्वात्। तत्र च क्तः सकर्मकाकर्मकसाधारण्येन सर्वेभ्योऽप्यनेन विधीयते। तदाह—लकारवदित्यादिना। कालसामान्येऽयं क्तः। स्निग्धं वीक्षितं, यातं यच्चेति कालिदासः। वीक्षणं, यानमित्यर्थः॥ वर्तमान एवेति। 'वर्तमाने लडि'त्यतो वर्तमान इति वर्तते। विशिष्य विधानाद् नियमाभिमानः। काशिकाकारो वर्तमानेऽमासे विधीयत इत्याह। तेन भीतं धृष्टमिति कर्तरि भावे भूतेऽपि सम्भवि॥ मतिबुद्धिपूजार्थेभ्यश्च। मतिरिच्छा। बुद्धिर्ज्ञानम्। तदाह—इच्छाज्ञानेति। वर्तमान एवेति। अत्रापि प्रत्ययनियमोऽभिमतः। अत्र सूत्रे कैयटस्तु—ज्ञातमिति भूतेऽपि भवतीति वदन् भूते कर्तरि कर्मणि भावे च यथाप्राप्तमपि क्तमिच्छति। तेनेत्थमिकारात् तृतीयान्तादुपज्ञातेऽर्थेऽण्प्रत्ययविधानात्। वर्तमाने हि 'क्तस्य च वर्तमाने' इति षष्ठ्या भाव्यमिति मुनिवचनं च प्रमाणमुपन्यास्थत्। चकारादन्येभ्योऽपीति। नियमाभिमानात् प्रकृतिसमुच्चये दृष्टिः। वृत्तौ तु अनुक्तसमुच्चयार्थश्चकार इत्येव स्थितम्। तेन

शयितस्निग्धसक्ताक्तलग्नलिप्तमृतासिताः ।
सहितक्षुधितक्रुद्धदिग्धशीलितरक्षिताः ॥
पूर्णावतीर्णमुदिता आयस्तरुषितोद्यताः ।
रुष्टाकुष्टश्लिष्टतुष्टहृष्टाभिव्याहृतामृताः ॥
रूढमूढौ वृत्तदृप्तमत्तमीलितविस्मिताः ।
क्षान्तश्रान्तक्लान्तकान्ताः संरब्धारब्धसंयुताः ॥
जुष्टश्चैते वर्तमाने कष्टो भाविन्यपीष्यते ।
पीडां कुर्वन् करिष्यन् वा कष्टो भोजोदिता इमे ॥
सर्वेभ्यो हेतुसम्पत्तौ वेति क्तं प्राह भाविनि ।
भोजस्ततो हतः शत्रुरित्यादि प्रागपीर्यते ॥

अथ निष्ठाकार्याण्युच्यन्ते ॥

### श्र्युकः किति (७. २. ११)

श्रिञ उगन्ताच्चैकाचः परस्य कित्प्रत्ययस्येण् न स्यात् । श्रितः । श्रितवान् । ऊदृदन्तादीनां सेट्त्वात् तन्निषेधार्थमुक इत्युक्तम् ।

---

कष्टमिति भविष्यति सिध्यति । भोजमतेनेच्छाज्ञानपूजार्थेभ्योऽन्येष्वपि धातुषु क्तान्तान् शब्दान् कारिकाभिः सङ्गृह्णाति—शयितस्निग्धेत्यादिना । पीडां कुर्वन्निति । कष्टस्य वर्तमानेऽप्युपयोगसम्भवोऽनेन प्रदर्शितः । सर्वेभ्य इति । यथायथं कर्मणि भावे कर्तरि च क्तप्रत्यययोग्येभ्यः सकर्मकेभ्योऽकर्मकेभ्यश्च धातुभ्य इति शेषः । अत एवोदाहरणं हतः शत्रुरिति । हनिष्यमाणे शत्रौ आप्रत्यां हननहेतुसम्पत्तावचिरभाविनि हनने प्रयोगोऽयम् । एवमेव गमन-सामग्रीसम्पूर्तौ क्रीडाकारणपौष्कल्ये च भाविनि गमने क्रीडने च गतः कृष्णो मथुरां, कृष्णेन क्रीडितमित्यादयः प्रयोगा अपि भवन्ति ॥ श्रिञ इति । उगन्तत्वाभावात् । एकाच इति । 'एकाच उपदेश' इत्यत एकाच इत्यनुवर्तते । उपदेश इत्यस्याप्यनुवृत्तिर्वक्तव्या । तेन तीर्ण इत्यादिस्थले सम्प्रति रेफान्तत्वेऽपीण्निषेधः सिध्यति । कित्प्रत्ययस्येति । चर्त्वेन गकारप्रश्लेष-माश्रित्य गितोऽपीण्निषेध इति पक्षान्तरम् । तेन भूष्णुरित्यत्र गितो ग्स्नोरि-

---

१. 'ष', २. 'तः ।' ग. पाठः. ३. 'स' क. ख. पाठः.

भूतः । भूतवान् । अनेकाचः पुनरुगन्तत्वेऽपीडेव । जागृ इ त । अत्र कित्त्वादगुणे प्राप्ते ॥

जाग्रोऽविचिण्णल्ङित्सु (७. ३. ८५)

जागृधातोर्विचिण्णल्ङिद्भ्योऽन्यत्र गुण एव । जागरितः । ऊर्णोतेस्तु "वाच्य ऊर्णोर्णुवद्भाव" इति णुधातुवदेकाच्त्वान्नेट् । ऊर्णुतः । तॄ त । 'ॠत इद्धातोः' (७-१-१००) । तिर् त ॥

रदाभ्यां निष्ठातो नः पूर्वस्य च दः (८. २. ४२)

रेफदकाराभ्यां परस्य निष्ठातकारस्य नत्वं स्यात् पूर्वस्य दकारस्य च स्यात् । तिर् न ॥

हलि च (८. २. ७७)

हलि परे रान्तस्य वान्तस्य च धातोरुपधाया इको दीर्घः स्यात् । णत्वं, तीर्णः । तीर्णवान् । कीर्णः । दकारान्नत्वम् । भिन्नः । छिन्नः ॥

---

डभावः । उक इत्युक्तम् । श्र्युक इति वक्तव्यम् । श्रिञोऽपि तत्रैव पाठेन सेट्त्वात् क्लिटो निषेधः ॥ जाग्रोऽविचिण्णल्ङित्सु । श्र्युकः कितीत्यत्रैकाजनुवृत्तेः फलकथनाय जागृ + इत इति रूपे प्रदर्शनीये कित्त्वाद् गुणाप्रवृत्तेस्तत्प्रतिप्रसवायास्य सूत्रस्येह विवरणम् । वृद्धिविषये प्रतिषेधविषये चेदम् । वेरगुणः जागृविः । "जॄशॄस्तॄजागृभ्यः क्विन्" इति क्विन्प्रत्ययान्तोऽयम् । केचिद् वकारादिप्रत्ययसामान्यं पर्युदसनीयं मन्वानाः क्वसावपि निषेधं स्वीकुर्वते । यथा—जजागृवान् । चिणि अजागारि । णलि जजागार । ऊर्णोतेस्त्विति । वस्तुतोऽनेकाच्त्वादुगन्तत्वेऽपीड् भवत्येवेति मनसिकृत्येदमुत्थापनम् । निष्ठातकारस्येति । रदाभ्यामिति न निष्ठाया विशेषणं, किन्तु तदवयव तकारस्य । तेन चरितमित्यादाविटा व्यवधानान्न नकारादेशः । पूर्वस्य दकारस्येति । अतो भिन्नवद्भ्यां भिन्नवद्भिरित्यादिस्थले परस्य न ॥ 'सिपि धातोरि'त्यतो धातोः, 'र्वोरुपधाया' इति च समग्रमनुवर्तत इत्यतो विवृणोति —

संयोगादेरातो धातोर्यण्वतः (८. २. ४३)

संयोगादेर्यण्वत आदन्ताद् धातोर्निष्ठातस्य नत्वं स्यात् । स्त्यानः । 'प्रा पूरणे' । प्राणः । ग्लानः ॥

ल्वादिभ्यः (८. २. ४४)

ल्वादिभ्यो द्वाविंशतेर्निष्ठानत्वं स्यात् । लून इत्यादि । 'दुग्वोर्दीर्घश्चेति वाच्यम् ।' (वा० ८-२-४४)

गत्यर्थाद् दोरसौ दूनो दुनोतेर्दुत एव हि ।
तदर्थे दूनसिद्धिस्तु पीडार्थाद् दू(ञ ? ङ) ओदितः ॥

'गु पुरीषोत्सर्गे'। गूनः । 'पूञो विनाशे' (वा० ८-२-४४) । पूना यवाः । अन्यत्र पूतम् ।

ग्रासस्य कर्मकर्तृत्वे निष्ठानत्वं भवेत् षिञः ।
स्वयमेव सिनो ग्रासः सुखबद्धस्तथोच्यते ॥

---

हलि पर इत्यादि ॥ संयोगादेरित्यादि० । संयोगादित्वाभावाद् यातः, आदन्तत्वविरहाच्च्युतः, अधातुत्वान्निर्वातः, यणोऽभावात् स्नातः, इत्यादिषु न नकारादेशः । प्राण इति । 'प्रा पूरणे' इत्यदादिपठितस्येदम् ॥ द्वाविंशतेरिति । एकविंशतेरिति दीक्षिताः । द्वाविंशतौ ल्वादिषु पूञं विहायैकविंशतिरिति केचित् । तन्मते सम्प्रति पठितानां त्रयोविंशतेर्गतिः कथङ्कारं युज्यताम् । द्वाविंशतिरिति तु 'जॄ वयोहानौ' इत्यत्र झॄ इत्येके, धॄ इत्यन्ये[1] इति द्वयोः पाठयोरन्यतरपरित्यागेन स्यात् सम्भवेत् । दृश्यते च धातुवृत्तौ धॄ इत्यस्यैव केचित्पक्षतया परिग्रहः, न झॄ इत्यस्यापि । वस्तुतस्तु ॠदन्तानां पञ्चदशानां रदाभ्यामित्येव सिद्धाववशिष्टाः सप्तैव धातव इह नत्वविधये ल्वादित्वेन ग्राह्याः । गत्यर्थादिति । भ्वादेरिति शेषः । दुत एवेति । तथाच माघः — 'मृदुतया दुतयाधरलेखया' इति । तदर्थे उपतापार्थे । ओदित इति । 'स्वादय ओदित' इत्युक्तत्वात् । पूञो विनाश इति । 'पूञो विनाश इति वक्तव्यमि'ति वृत्तिः । षिञः । स्वादेः । क्र्यादेस्तु सितः सितवानिति रूपम् ।

---

१. 'न्ध' ख. पाठः.

दध्यादियोगाद् ग्रासो हि सुसंश्लिष्टो भवेन्मिथः ।
नानार्थत्वात् तु धातूनां सुखभुक्त इतीतरे ॥

अन्यत्र तु सितः पाशेन ॥

ओदितश्च (८. २. ४५)

ओदितो धातोर्निष्ठानत्वं स्यात् । 'भुजो कौटिल्ये' । भुज् न । नत्वस्यासिद्धतया झलादित्वात् चोः कुः । भुग्नः । 'ओहाक् त्यागे' । 'घुमास्था—' (६-४-६६) इतीत्वम् । हीनः । 'ओहाङ् गताविं'त्यस्य त्वीत्वं न । हानः । 'टुमस्जो शुद्धौ' । अन्त्यात् पूर्वं नुम् । तस्य 'अनि-दितां—' (६-४-२४) इति नलोपः । 'स्कोः—' (८-२-२९) इति सलोपः । चोः कुः । मग्नः । स्वादय ओदितः । ते च 'षूङ् प्राणिप्रसव' इत्यादयः श्यनि ।

सूनो डीनो दीनदूनौ लीनो धीनस्त्विहाश्रितः ।
व्रीणो वृतो मृतो मीनः (स्नु ? श्रु)तो रीणो नवैव ते ॥

एभ्यः परस्य तस्य नत्वोक्त्यास्य डीङः इहेण् न । प्रसूत इति सूतेः सिद्धम् । क्षि त ॥

---

कर्मकर्तृत्वं ग्रासस्यार्थवशसम्पन्नं विशदयति—दध्यादियोगादित्यादिना । सुखभुक्त इति । षिञो भोजनार्थत्वमङ्गीकृत्येदम् । अन्यत्रेति । कर्मकर्तृ-त्वविरहे, कर्मणि । सितः । ग्रास इति शेषः । ओहाङ् गताविंत्यस्य त्विति । ईत्वविधौ जहातीति स्वरूपग्रहणाद् हाङो जिहीतिस्वाद्ग्रहणमि-त्याशयः । ईत्यादय इति । तेषां सङ्ग्रहः कारिकया—

षूङ्-दूङ्-दीङ्-डीङ्-तथा धीङ् च
मीङ्-रीङ्-लीङ्-व्रीङ् च धातवः ।
दिवाद्यन्तर्गणाः प्रोक्ता
ओदितः स्वादयो नव ॥

आश्रितः, वृतः, मृतः, श्रुत इति । धीङ्व्रीङ्मीङ्लीङां यथा-क्रमम् आधार-वरण-हिंसा-श्रवणार्थकानां निष्ठायां कारिकाघटकोदाहरणाना-मिदमर्थकथनम् । इण् नेति । अकृतव्यूहपरिभाषया वकादित्वनिमित्तस्य नत्वे

---

१. 'रते ॥' ग. पाठः.

निष्ठायामण्यदर्थे (६. ४. ६०)

भावकर्मणी ण्यदर्थौ । ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात् । क्षी त ॥

क्षियो दीर्घात् (८. २. ४६)

दीर्घात् क्षियो निष्ठातस्य नत्वं स्यात् । क्षीणः, क्षीणवान् । भावकर्मणोस्तु दीर्घो नत्वं च न । क्षितं दैत्यैः । क्षिताः कृष्णेन दैत्याः । ण्यर्थान्तर्भावात् सकर्मकः ॥

वाक्रोशदैन्ययोः (६. ४. ६१)

शापे दैन्ये च द्योत्ये क्षिय उक्तदीर्घो वा स्यात् । दीर्घपक्षे नत्वम् । क्षीणायुः क्षितायुर्वाऽस्तु दुष्टः । क्षीणा क्षिता वेयं श्रान्त्या । भावेऽपि दीर्घो वेति कौमुदी । क्षीणं क्षितं वानेन । श्यैङ आत्वम् । श्या त ॥

द्रवमूर्तिस्पर्शयोः श्यः (६. १. २४)

द्रवस्य काठिन्ये स्पर्शविशेषे चार्थे श्याधातोर्निष्ठायां सम्प्रसारणं स्यात् । पूर्वरूपम् । शि त ॥

हलः (६. ४. २)

अङ्गस्थहलः परं यत् सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात् । शी त ॥

---

तकारस्य विनाशात् । ग्लेरिति । आदादिकस्यैदित्त्वाभावादिति शेषः । निष्ठायामण्यदर्थे । 'क्षियो दीर्घादि'ति निष्ठानत्वविषये निमित्तभूतं दीर्घं प्रदर्शयितुमिदम् । ण्यदर्थाविति । ण्यतः कृत्यप्रत्ययस्यार्थौ भावकर्मणी । भव्यगेयान्तर्गणाप्लाव्यापात्ययोर्ण्यतः कर्त्रर्थकत्वेऽपि क्षिसमभिव्याहारे भावकर्मणोरेव सम्भव इत्याशयः ॥ सकर्मक इति । क्षिताः कृष्णेनेत्येतदर्थमिदम् । 'क्षीणक्षीणः प्रविशति' इति साम्बः ॥ अस्त्विति । आक्रोशद्योतनायेदम् । आत्वमिति । 'आदेच' इत्यनेन ॥ द्रवमूर्तिशब्दार्थमाह — द्रवस्य काठिन्य इति । द्रवावस्थाया उत्तरावस्थाविशेषः द्रवस्य मूर्तिः काठिन्यं नाम । स्पर्शश्च रूपादिसहचरितो

---

१. 'त्वं च स्या' ग. पाठः.

श्योऽस्पर्शे । (८. २. ४७)

अस्पर्शेऽर्थे श्यैङो निष्ठानत्वं स्यात् । शीनं घृतम् । द्रवावस्थातः कठिनीभूतमित्यर्थः । स्पर्शे तु नत्वाभावात् शीतं वर्तते । शीतो वायुः । अर्थद्वयादन्यत्र तु श्यः प्रसारणाभावे यण्वत्वान्नत्वम् । ईषच्छुष्क आश्यानः कुन्तलः । शीतात् संकुचितः संश्यानः शेते ॥

प्रतेश्च (६. १. २५)

प्रतिश्यैङः काठिन्यस्पर्शाभ्यामन्यत्रापि प्रसारणं स्यात् । अस्पर्शार्थत्वान्नत्वम् । प्रतिश्यायरोगवान् प्रतिशीनः ॥

विभाषाभ्यवपूर्वस्य (६. १. २६)

अभ्यवपूर्वस्य श्यैङः काठिन्यस्पर्शयोरपि प्रसारणं वा स्यात् । अभिशीनमभिश्यानं वा घृतम् । अभिशीतोऽभिश्यानो वा वायुः । स्पर्शार्थेऽपि यण्वतो नत्वमेव । एवमवादपि योज्यम् । पूर्वग्रहणादभि-

---

गुणः ॥ शीनं घृतम् । द्रवमूर्तिं विवृणोति — कठिनीभूतमित्यनेन । शीतमिति । शैत्यमित्यर्थः । शीत इति । गुणवत्परोऽयम् । 'गुणमात्रे तद्वति च शीतशब्दस्य वृत्तिर्द्रष्टव्ये'ति काशिका । अन्यत्रेति । धातूनामनेकार्थत्वात् । पठितश्चार्थस्तन्नूकरणम् । तच्च काठिन्येन क्वचित्, स्पर्शेनापरत्र, शोषेणेतरत्र, सङ्कोचेनान्यत्रेति नानात्मा प्रयोगोपाधिर्द्रष्टव्यः ॥ अन्यत्रापीति । पृथक् सूत्रारम्भादिति शेषः । द्रवमूर्तिस्पर्शयोः पूर्वेणैव सिद्धेः । प्रतिश्यायेति । 'प्रतिश्यायस्तु पीनसः' इत्यमरः । 'स्फैयकृतस्य पिता प्रतिशीन' इति भगवान् पतञ्जलिः ॥ विभाषाभ्यवपूर्वस्य । उभयत्र विभाषेयम् । काठिन्यस्पर्शयोः प्राप्तावन्यत्राप्राप्तौ च विधानात् । अभिशीनम्, अभिश्यानं वा । भावे कर्मणि च । पूर्वग्रहणमभ्यवेतरपूर्वे मा भूत् । समभिश्यानं समवश्यानम् । अभ्यवसमुदायपूर्वत्वविरहाद्वा व्यवस्थितविभाषया वा नेह भवतीति पूर्वग्रहणस्य प्रयोजनान्तरमेव मृग्यमिति केचित् । तन्मते पूर्वग्रहणस्य प्रयोजनं सर्वपूर्वतयाभेरवस्य वा यत्र सम्मेलनं तत्रापि विकल्पेन यथा स्यादिति ।

संशीनोऽभिसंश्यान इत्यपि स्यात् । समभिश्यानं इत्यादौ त्वन्यपूर्वत्वात् प्रसारणं नेत्येके ॥

### अञ्चोऽनपादाने (८. २. ४८)

अपादानयोगाभावे अञ्चेर्निष्ठानत्वं स्यात् । 'अनिदितां—' (६-४-२४) इति नलोपः । नत्वस्यासिद्धया झलि कुत्वं कः । समक्नाविमौ । सङ्गतावित्यर्थः । अपादाने तु कूपादुदक्तमुदकम्, उद्धृतं तत् ॥

### दिवोऽविजिगीषायाम् (८. २. ४९)

विजिगीषातोऽन्यत्र दिवो निष्ठानत्वं स्यात् । 'च्छ्वोः शूडनुनासिके—' (६-४-१९) इति वस्य ऊठ् । यण् । आद्यूनो भुक्तिमात्रोत्साही । परिद्यूनः क्षीणः । विजिगीषायां तु द्यूतम् । द्यूतवान् ॥

### निर्वाणोऽवाते (८. २. ५०)

वातादन्यत्र निर्वाणोऽग्निरित्यादि नत्वम् । वाते निर्वातः पवनः । शान्त इत्यर्थः । वातेऽपि भावे वा नत्वमाह हरः । निर्वाणं निर्वातं वा वायुना ॥

### शुषः कः (८. २. ५१)

शुषेर्निष्ठातस्य कः स्यात् । शुष्कः, शुष्कवान् ॥

### पचो वः (८. २. ५२)

पक्वः पक्ववान् ॥

---

अभिसंशीनम्, अभिसंश्यानं वा । अवसंशीनम्, अवसंश्यानं वा ॥ उदक्तमिति । व्यक्तमित्यादिरपि । अञ्चेः क्रान्ते अक्तपरिमाण इति स्वनिकायप्रसिद्धिः ॥ भुक्तिमात्रोत्साही, क्षीणः इति चाविजिगीषाद्योतनाय विवरणम् ॥ इत्यादीति । आदिना निर्वाणो भिक्षुः, निर्वाणं ब्रह्मवर्चसमित्याद्युदाहार्यम् ॥ पचो वः । निष्ठातकारस्य वकारः । पक्वः । वत्वस्यासिद्ध-

१. 'नामित्या' क. ख. पाठः. २. 'दावन्य' ग. पाठः. ३. 'डिति व' ख. घ. पाठः.

क्षायो मः (८. २. ५३)

'क्षै क्षये' इत्यस्यात्वे क्षामः । क्षामवान् ॥

स्त्यः प्रपूर्वस्य (६. १. २३)

प्रपूर्वस्त्याधातोर्निष्ठायां प्रसारणं स्यात् । 'हलः' (६-४-२) इति दीर्घः ॥

प्रस्त्योऽन्यतरस्याम् (८. २. ५४)

अस्मान्निष्ठातस्य मत्वं वा स्यात् । प्रस्तीमः प्रस्तीतः । घनीभूत इत्यर्थः । प्रपूर्वस्येत्युक्तेः प्रसारणं तु प्रसंस्तीत इत्यत्रापि स्यात् ॥

अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः (८. २. ५५)

एते उपसर्गाभावे क्तान्ता निपात्यन्ते । 'ञि फला विशरण' इत्यस्य फुल्लः । अस्य क्तवतावपि लत्वमिष्टम् । फुल्लवान् । 'क्षीबृ मदे' । क्षीबः । 'कृश तनूकरणे' । कृशः । उल्लाघो नीरोगः । उपसर्गात्तु प्रफल्‌ त ।

---

त्वा'च्चोः कुरि'ति कुत्वम् । 'जम्बूफलानि पक्वानी'त्याभाणकीयाः ॥ क्षामः । 'क्षामक्षामकपोलमि'ति भवभूतिः ॥ स्त्य इति । 'ष्ट्यै स्त्यै' इत्यनयोरुभयोरपि ग्रहणमिति वृत्तिः ॥ प्रस्त्य इत्येव सिद्धे पूर्वग्रहणात् प्रः पूर्वो यस्येति बहुव्रीहिणा प्रसंस्तीत इत्यत्रापि सम्प्रसारणं सिध्यति । मत्वं तु प्रस्त्य इत्युक्तेः प्रसंस्तीत इत्यत्र न भवति । तदाह — प्रसंस्तीत इति । प्रस्तीतः । 'संयोगादेरातो धातोर्यण्वत' इत्यस्य पूर्वत्रासिद्धतया कृते च सम्प्रसारणे निमित्तव्याघातान्न नत्वमिति यावत् ॥ निपात्यन्त इति । फलतेर्निष्ठाया लत्वं, क्षीबकृशिभ्यामुत्पूर्वाल्लाघेश्च क्तप्रत्ययस्य तलोप इडभावश्च निपात्यत इति भावः । फलेरुत्वमिडभावश्चान्यथैव सिद्धे इति न निपातनमर्हतः । फुल्लः फुल्लवानिति । 'फल निष्पत्तावि'त्यस्य तु फलितः फलितवानित्येव रूपम् । आदित्वाभावादिडभावस्यापि निपात्यतापत्तेर्न ञिफलावल्लत्वनिपातनं साम्प्रतम् । 'फुल्लारविन्दनयने नय नेह शान्तिमि'त्यभियुक्ताः । क्षीबः । 'अपीतक्षीबकादम्बमि'ति दण्डी । उल्लाघो नीरोगः । 'उल्लाघो निर्गतो गदादि'-

आदितश्च (७. २. १६)

आदितो धातोर्निष्ठायामिण् न स्यात् ।

ति च (७. ४. ८९)

तकारादौ परे चरफलोरत उत् स्यात् । प्रफुल्तः । तृजादौ सेट्त्वादुत्वं न । प्रक्षीवितः । प्रकृशितः । प्रोल्लाघितः । 'उत्फुल्लसंफुल्लयोरुपसंख्यानम् ।' (वा० ८-२-५५) परिकृशश्चेष्यते । 'फुल्ल विकसन' इत्यस्य पचाद्यचि प्रफुल्लाद्यपि स्यात् ।

नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् (८. २. ५६)

एभ्यो निष्ठानत्वं वा स्यात् । नुन्नः, नुत्तः । 'विद विचारणे' विन्नः, वित्तः । उन्नः, उत्तः । त्राणः, त्रातः । घ्राणः, घ्रातः । ह्रीणः, ह्रीतः । वेत्तेस्तु सेट्त्वाद् विदितः । विद्यतिविन्दत्योर्विन्न एव ।

न ध्याख्यापॄमूर्च्छिमदाम् (८. २. ५७)

एभ्यो निष्ठानत्वं न स्यात् । ध्यातः । ख्यातः । पूर्तः ।

उदोष्ठ्यपूर्वस्य (७. १. १०२)

---

त्यमरः ॥ प्रफुल्त इति । ञिफलाधातोर्निष्ठायामिडभावात् । उत्फुल्लेति । सोपसर्गतयेदं वचनम् । 'उत्फुल्लकमलकोरकपरागगौरद्युते! मम हि गौरि!' इति नागानन्दे । इष्यत इति । भाष्ये तु पर्यागतः कार्श्येन परिकृश इति व्युत्पत्त्या परेः कृशिं प्रत्यनुपसर्गत्वं सम्पाद्य परिकृशः साधितः । प्रफुल्लाद्यपीति । तेन 'लोध्रद्रुमं सानुमतः प्रफुल्लमि'ति कालिदासप्रयोगः सङ्गच्छते ॥ अन्यतरस्यामिति । ह्रियोऽप्राप्तेऽन्येषां प्राप्ते चोभयत्र विभाषेयम् । विद विचारणे इति । परेणोन्दिना साहचर्याद् व्याख्यानाद् वा रौधादिकस्यैव ग्रहणमित्याशयः । विदित इति । 'विदितं व सुराः' इति कालिदासः । इत्थमिह रूपसङ्ग्रहः कारिकया काशिकायां —

"वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः ॥"

इति ॥ न ध्याख्येति । आद्ययोः 'संयोगादेरि'ति परेषां 'रदाभ्यामि'ति च प्राप्तस्य नत्वस्यायं निषेधः । ध्यातः । 'न ध्यातं पदमीश्वरस्ये'ति भर्तृहरिः ॥

अङ्गगतौष्ठ्यपूर्वो य ऋकारस्तदन्तस्य धातोरुत् स्यात् । पुर्त । 'हलि च'(८-२-७७) इति दीर्घः । पूर्त्तः । 'राल्लोप' (६-४-२१) इति छलोपः । मूर्त्तः । मत्तः ॥

**वित्तो भोगप्रत्यययोः (८. २. ५८)**

धने प्रसिद्धे च वाच्ये लाभार्थाद् विदेरिदं निपात्यते ॥

**भित्तं शकलम् (८. २. ५९)**

शकलनामैतत् । भिन्नमन्यत् ।

**ऋणमाधमर्ण्ये (८. २. ६०)**

आधमर्ण्यहेतुभूते द्रव्ये वाच्ये 'ऋ गतावि'त्यस्माद् ऋणमिति स्यात् । ऋतमन्यत् । उदीर्णं तु ऋणातेः । अथेट्कथा ।

---

अङ्गगतेति । न त्वङ्गभूतस्य । अङ्गावयवस्येति यावत् । तेन सम्पूर्वस्य 'ऋ गतावि'ति धातोर्निष्ठायां समीर्ण इत्येव रूपम् । न तूता समूर्ण इति । ऋ इति चाङ्गं; नाङ्गावयवः । पूर्तः । 'श्र्युक' इति निषेधादिडभावः । मूर्त इति । 'मुर्च्छा' इत्यादित्वादिडभावः । मत्त इति । मदीतीदित्वान्नेट् ॥ धने प्रसिद्धे चेति । भुज्यत इति भोगो धनम् । प्रतीयत इति प्रत्ययः प्रतीतः प्रसिद्धः इति कर्मसाधनतया तदर्थलाभः । लाभार्थादिति । अर्थसाङ्गत्यात् । 'तेन वित्तश्चुञ्चुपूचणपा'विति पाणिनिसूत्रे वित्तः प्रसिद्ध इत्यर्थः ॥ भित्तं शकलमिति । सामानाधिकरण्येनार्थनिर्देशः । घटः कम्बुग्रीवादिमानितिवत् । शकलमित्यर्थे भित्तमिति तद्घटितं रूपम् । तदाह — शकलनामैतदिति । अतः पर्यायतया भित्तशकलयोर्न युगपत्प्रयोगो लोके । निष्पन्नस्य शकलस्यान्यस्मिन् विदारणे प्रतिपाद्ये भिन्नमिति भवत्येवे'त्युपाध्यायाः । 'भित्तं शकलखण्डे वे'त्यमरः ॥ ऋणमिति । कालान्तरदेयं द्रव्यमनेनाभिधीयते । तदाह — द्रव्ये वाच्ये इति । अधम ऋणे = अधमर्णः, तद्भाव आधमर्ण्यम् । अनेनैव निर्देशेन सप्तम्यन्तेनोत्तरपदेन समासः । आधमर्ण्यव्यवहारोऽयं दातृग्रहीत्रोः सम्बन्धीत्युत्तमर्णोऽपि साधुः । 'धारेरुत्तमर्ण' इति निर्देशश्चैवमर्थकल्पने लिङ्गम् । तदिदमखिलं मनसिकृत्य व्याचष्टे — आधमर्ण्यहेतुभूत इति । ऋतमन्यत् । सत्यमित्यर्थः । उदीर्णमिति । इत्वे

---

१. 'णंस्त्वृणा' ग. पाठः.

## श्वीदितो निष्ठायाम् (७. २. १४)

श्विधातोरीदितश्च निष्ठायामिण् न स्यात् । 'टु ओ श्वी'त्योदित्त्वान्नत्वम् । यजादित्वात् सम्प्रसारणम् । दीर्घः । शूनः । दीपी, दीप्तः । 'ओ लस्जी व्रीलने' । ओदित्त्वान्नत्वम् । नत्वस्यासिद्ध्या झल्त्वात् 'स्कोः—' (८-२-२९) इति सलोपः कुत्वं च । लग्नः । लज्जाशब्दात् 'तदस्य सञ्जातं—' (५-२-३६) इतीतचि लज्जितसिद्धिः ।

## यस्य विभाषा (७. २. १५)

यस्य क्वचिद् विभाषेडुक्तिस्तस्य निष्ठायामिण् न स्यात् । ऊदितो वेडुक्तः । गुपू, गुप्तः गुहू, गुह् त । 'हो ढः' । गुढ् त । 'झषस्तथो—'(८-२-४०) इति तस्य धः । ष्टुत्वम् । गुढ् ढ । ढो ढे लोपः 'ढ्लोपे—' (६-३-१११) इति दीर्घः । गूढः । 'ओ व्रश्चू' । व्रस् च् त 'ग्रहिज्या—' (६-१-१६) इति प्रसारणम् । वृस् च् त । ओदित्वान्नत्वम् । वृस् च् न । नत्वस्यासिद्धया झलि 'स्कोः—' (८-२-२९) इति सलोपः । वृच् न । नत्वस्यासिद्धतयैव व्रश्चादिषे प्राप्ते । 'निष्ठादेशः षत्वे कार्ये सिद्धो वाच्यः' । (वा० ८-२-३) इति नकारस्यैव सिद्धत्वेन झल-

'ह्ली'ति दीर्घे ल्वादित्वान्नत्वे णत्वे च रूपमिदम् ॥ श्विधातोरिति । अन्तरङ्गतया सम्प्रसारणपूर्वत्वयोः कृतयोः 'श्रयुक' इत्येव निषेधः सिद्ध इति न शङ्क्यम् । तीर्त्वेत्यादिसिद्धये तत्रोपदेश इत्यनुवृत्तेः । 'स्वर्गग्रामटिकाविलुण्ठन वृथोच्छूनैः किमेभिर्भुजैः' । महानाटकम् । ईदित उदाहरति — दीपी दीप्त इत्यादिना । लग्न इति । एवम् 'ओ विजी'त्यादेरुद्विग्न इत्यादि बोध्यम् । लज्जितरूपसिद्धावभ्युपायं दर्शयति — लज्जाशब्दादित्यादिना । ओदितां मध्ये पाठादेव ज्ञापकादिडभावेन डीङ उड्डीन उड्डीनवानिति च सिद्धम् ॥ ऊदितो वेडुक्त इति । 'स्वरतिसूतिसूयतिधूञूदितो वे'त्यादिः । ओ व्रश्चू इति । ओदित्त्वं नत्वाय । निष्ठादेशः षत्वे कार्ये सिद्धो वाच्यः इति वार्तिकैकदेशः । 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्य' इति सम्पूर्णं वार्तिकशरीरम् । स्वरप्रत्यययोः क्षीबः क्षैबिक इति आद्युदात्तत्वं स्वरः

१. 'हु प्रथा', २. 'त्वाखि' क. ख. पाठः, ३. 'नस्या' ग. पाठः.

भावान्न षत्वम् । चोः कुः । वृक्णः । 'रधादिभ्यश्च'(७-२-४५) इति वेट् । रद्धः । नश् त । छशां षः । ष्टुत्वं, नष्टः । द्रुहादेर्वा घः । द्रुग्धः द्रूढ इत्यादि । 'तीषसह—' (७-२-४८) इति वेट् । इष्टः । सह् त । ढत्वधत्वष्टुत्वढलोपाः । 'सहिवहो—'(६-३-११२) इत्योत्त्वम् । सोढः । 'उदितो वा'(७-२-५६) इति क्त्वायामिड्विकल्पः । शमु । 'अनुनासिकस्य क्विझलोः—' (६-४-१५) इति दीर्घः । शान्तः । वृधु, वृद्धः । 'धावु गतिशुद्ध्योः' । ऊठ् । धा ऊ त । 'एत्येधति—'(६ १-८९) इति वृद्धिः । धौतः । धौतवान् । 'यस्य विभाषा' (७ २-१५) इत्यस्यानित्यत्वादिटि धावितः धावितवानित्यपि माधवः । एवं 'तनु विस्तारे' इत्यस्य तनितोऽपीति हरः । 'मनु अवबोधने' इत्यस्य मनितोऽपीति स्वामी । मनसा जानाति मनयतीति ण्यन्तान्मनितमित्यन्ये । पतिदरिद्रात्योः सनि विकल्पितेट्कत्वेऽप्युक्तानित्यत्ववशान्निष्ठायामिडेवेति माधवः । पतितः । दरिद्रितः । 'ल्युडकवर्जित आर्धधातुके कर्तव्ये दरिद्रातेराल्लोपो वाच्यः' (वा० ६-४-११४) इत्याल्लोपः । 'सेऽसिचि कृत-

---

ठञ् च प्रत्ययो यथासङ्ख्यं प्रयोजनम् । रधादिभ्यश्च । रध्, नश्, तृप्, दृप्, द्रुह्, मुह्, स्नुह्, स्निह् इति रधादिः । सोढः ।

'सोढस्त्वया सुतनु ! वारिधरोदयो यद्
बाढं त्वदन्तरतिधार्ष्ट्यमिदं विचष्टे ।
ऊष्माणमुज्ज्वलमुदूढमहो दधाति
ग्रीष्मागतेऽपि सुकुमारमुरोजयुग्मम् ॥'

इत्याभाणकाः ।

'सोढा दुरसहशीतवाततपनक्लेशाः ।'

भर्तृहरिः ।

माधव इति । 'सेऽसिचि कृतचृतच्छृदतृदनृतः' इत्यनेन सकारादाविड्विकल्पनात् 'यस्य विभाषे'त्येव निष्ठायामिडभावे सिद्धे तत्साधनाय कृतीत्यादावीत्वकरणं तदनित्यत्वे ज्ञापकमिति मैत्रेयमतमवलम्ब्येदम् । 'अहो नु धावितो बालः' धावितवान् वा । ण्यन्तादिति । 'कर्तृकरणाद्धात्वर्थे' इति णिचेत्यादिः । विकल्पितेति । 'तनिपतिदरिद्राणामुपसङ्ख्यानमि'ति वचनात् । 'पतितः

चृतछृदतृदनृतः' (७-२-५७) इति सादावामिचि प्रत्यये कृतादीनामिड्विकल्पः । कृत्तः । चृत्तः । 'छृदी दीप्तौ' । तृदिर्हिंसार्थः । 'रदाभ्यां—' (८-२-४२) इति नत्वम् । 'ऋवर्णाच्चेति वाच्यम्' (वा० ८-४-१) इति णत्वम् । छृण्णः । तृण्णः । नृत्तम् ॥

## विभाषा भावादिकर्मणोः (७. २. १७)

आदितो धातोर्भावादिकर्मणोर्निष्ठायामिण्निषेधो वा स्यात् । 'ञिश्विता वर्णे' । श्वित्तं श्वितितं वानेन । प्रश्वित्तः प्रश्वितितः । एवं नपुंसके भावे क्तेऽप्यूह्यम् । मूर्च्छितोऽयं त्वरितोऽयमिति तु लज्जितवत् । सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन । शकितः शक्तो वा हरिर्द्रष्टुम् । तुमुन्नन्तस्य कर्मैव शकेः कर्म । 'अस्यतेर्भाव इड् वा वाच्यः' (वा० ७-२-१७) अस्तमासितं वानेन । अन्यत्रास्तः शरः ।

पतितः पुनरुत्पतितः' इत्यादिर्बहुलः प्रयोगः । नृत्तम् । 'नृत्तं च नर्तनमि'त्यमरः ॥ विभाषा भावादिकर्मणोः । 'आदितश्चे'ति कर्तरि निषेधाय योगविभागः । स्विन्नो माधवः । 'यस्य विभाषे'त्यनेन सिद्धिनिरूपणं प्रौढिवादः । इण्निषेधो वेति । इड्विभाषायां पर्यवसानम् । कौमुद्यां फलितार्थकथनं वाच्यमेवोच्यते — इड् वा स्यादिति । प्रश्वित्तः । प्रोपसर्ग आदिकर्माभिव्यञ्जनाय । 'प्रमेदिताः सपुत्रास्ते' इति भट्टिः । मूर्च्छितोऽयमित्यादि । कर्तरि विकल्पविरहात् कथमेकविध एव प्रयोग इति शङ्का । लज्जितवदिति । मूर्च्छा त्वरा वा सञ्जातास्येति व्युत्पत्तावितचि बोध्यमिति शेषः ।

"विश्वरूपमवलोक्य मङ्क्षु सा
मूर्च्छिता भुवि पपात यशोदा ।"

कर्मणि निष्ठायां शकेरिति । यद्यपि शकिः स्वयमकर्मकस्तथापि तुमुन्नन्तवाच्यक्रियाविषयतायां सकर्मक इति कृत्वेदं वचनम् । तथाचोदाहरणम् — शकितः शक्तो वा हरिर्द्रष्टुमिति । तस्मात् कर्मणि लादयोऽपि सिध्यन्ति । तेन 'शक्यो योगविभागः कर्तुमि'त्यादि सिद्धम् । कर्मणीति वचनाद् भावे शक्तमनेनेत्येव । तुमुन्नन्तस्येति । तुमुन्प्रकृतिदृशेः शकेश्च समानकर्तृकत्वादिदम् । सकर्मकतुमुन्नन्तसमभिव्याहारे शकिः सकर्मकः, अन्यत्राकर्मक इति विवेकः । अकर्मकस्थलं — क्रीडितुं शक्तः कृष्ण इत्यादि । अस्यतेर्भाव

'जपिवम्याश्वसिविश्वसिभ्य' इति भोजेन निष्ठायां वेडुक्तः । जप्तः, जपितः । वान्तः, वमितः । आश्वस्तः, आश्वासितः । विश्वस्तः, विश्वसितः । 'आदितश्च' (७-२-१६) इति चकारादन्यत्रापि क्वचिदिण्नेति माधवोक्त्या प्रमुष्टादिसिद्धिः । 'चोरिते मुषितं मुष्टमि'ति स्वामी च ॥

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु (७. २. १८)

क्षुब्धादयोऽनिटः क्तान्ता मन्थाद्यर्थे निपातिताः ।
मन्थो मथनदण्डः स्यात् सक्तवो वा द्रवीकृताः ॥
तद्वाची क्षुब्धशब्दोऽयं तयोश्च चलितत्वतः ।
चलितेष्वपि सर्वेषु प्रयोगोऽस्योपचारतः ॥
स्वान्तं मनस्तमो ध्वान्तं सक्तं लग्नमितीर्यते ।

---

इति । क्षेपणार्थस्य दिवादेरविवक्षितकर्मणो वा उपतापार्थस्य वेदम् । जपीत्यादि । उदात्तत्वान्नित्ये प्राप्ते वचनमिदम् । वान्तः ।

"धारानिपातैः सह किन्नु वान्त-
श्चन्द्रोऽयमित्यार्ततरं ररासे ।"

इति पाणिनिः ।

'सखि ! आश्वस्ता भव', 'न विश्वसेदविश्वस्तम् ।' 'आदितश्चे'त्यत्र चकारमनुक्तसमुच्चयार्थमाश्रित्य आश्वस्तवान्तयोरुपपत्तिः काशिकायां स्पष्टा । मुष्टमिति ।

"मुष्टं प्रतिग्राहयिता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ।"

इति कालिदासः ।

क्षुब्धेत्यादि । क्षुभ्, स्वन्, ध्वन्, लग्, म्लेच्छ्, रेभ्, फण्, बाहामुदात्तानां क्त इडभावघटितरूपनिपातनमर्थविशेषेषु क्रियते । तयोश्चेति । द्वयोरर्थयोरिति शेषः । चलितत्वतः । चलितत्वं मथनदण्डे सक्तुषु च समानो धर्मः ।

अस्पष्टशब्दे वाच्ये तु म्लेच्छतेर्म्लिष्टमिष्यते।
स्वरे वाच्ये विरिब्धञ्च शब्दार्थाद् रेभतेर्भवेत्॥
उष्णाम्बुन्यौषधं क्षुण्णं क्षिप्त्वा सद्योऽभिषुत्य च।
पीयते यः कषायोऽसौ फाण्टोऽनायाससाधितः।
बाहृ प्रयत्न इत्यस्माद् भृशेऽर्थे बाढमिष्यते॥

एभ्योऽन्यत्र क्षुभितः। स्वनितः। ध्वनितः। विच्छन्नो लगितः। म्लेच्छितः। विरेभितः। फाणितो गतः। बाहितः॥

धृषिशसी वैयात्ये (७. २. १९)

अविनीतत्वेऽर्थेऽनयोर्निष्ठायामिण् न स्यात्। धृष्टो विशस्तो वायं वटुः। अन्यत्रेट्। धर्षितः। विशसितः॥

निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः (१. २. १९)

एभ्यः परा सेट् निष्ठा किन्न स्यात्। तेन धृषेर्गुण उक्तः॥

दृढः स्थूलबलयोः (७. २. २०)

---

अस्पष्टशब्द इति। 'अथ म्लिष्टमविस्पष्टमि'त्यमरः। अनायाससाधित इति। 'अनायासकृतं फाण्टमि'त्यमरः॥ धृषिशसी वैयात्ये। धृषेरादित्वात् शसेरुदित्त्वेन 'यस्य विभाषे'ति निषेधे सिद्धे नियमार्थोऽयं धृषिशस्योर्यत्र क्वचिद् वैयात्य एवेट् न भवतीति। एवञ्च भावादिकर्मणोरवैयात्य इडभावो न घटत इत्युक्तम्। हरदत्ताचार्यैर्धृषेरादित्त्वे प्रयोजनं चिन्त्यमिति कथितम्। माधवाचार्यस्तु अवैयात्ये विभाषामिच्छति — धृष्टं, धर्षितमिति। तत्पक्षे सप्रयोजनमादित्त्वम्। भावादिकर्मणोर्वैयात्ये धृषेरनभिधानान्नियमार्थत्वं वृत्तिमते। वैयात्यं वियातस्य भावः। विरूपं यातं गमनं चेष्टितं यस्य स वियातोऽविनीत इति कैयटः। तदुच्यतेऽविनीतत्वेऽर्थ इति। विशसितो गौः। विपूर्वशसेर्वैयात्ये विकारापादिकायां हिंसायां च वृत्तिः। तत्र निष्ठायां सेटो हिंसा अनिटो वैयात्यं चाभिधेये इति विशेषः प्रयोगौपाधिकः॥ किन्न स्यादिति। 'असंयोगादि'त्यतः किदिति पूर्वसूत्रान्नेति च वर्तेते। गुण

---

१. 'स्वरवाच्ये शब्दे तु' ग. पाठः. २. 'म्लिष्ट' ख. ग. पाठः

वृद्ध्यर्थयोर्दृहिदृंह्योः स्थूले बलवति च वाच्ये दृढ इति स्यात् । अन्यत्र दृहितो दृंहितः । अन्त्य इर्दित् ॥

प्रभौ परिवृढः (७. २. २१)

परिबृंहितोऽन्यः ॥

कृच्छ्रगहनयोः कषः (७. २. २२)

असह्यदुष्प्रापयोर्वाच्ययोः कषेरिण् न । कष्टो विरहः । कष्टं वनम् । कषितमन्यत् ॥

घुषिरविशब्दने (७. २. २३)

विशब्दनमभिप्रायाविष्करणं, ततोऽन्यत्र घुषेरिण न । घुष्टा घण्टा । घुष्टो गजेन वृक्षः । निघृष्ट इत्यर्थमाह शङ्करः । अन्यत्र

---

उक्तः । धर्षित इत्युदाहरण इत्यादि । धर्षितः प्रगल्भः ॥ दृहिदृंह्योरिति । दृंहेः क्त इडभावः, हकारनकारयोर्लोपः, परस्य ढत्वं च निपात्यते । अनोपधे तु नलोपवर्जमन्यत् सर्वम् । तत्र हलोपनिपातनं पूर्वत्रासिद्धत्वनिवृत्त्यर्थम् । अन्यथा ढलोपे तस्यासिद्धत्वाद् लघुरूपत्वविरहेण रादेशे द्रढिमेत्यादीनि न सिध्येयुः । अन्त्य इर्दिदिति । अतः 'अनिदिता'मिति लोपाभावाद् दृंहित इति सिद्धम् । 'दृढभक्तिरिति ज्येष्ठे' इति कालिदासः ॥ परिवृढः । इहापि वृहेर्बृंहेश्च पूर्ववन्निपातनम् । 'प्रभुः परिवृढोऽधिप' इत्यमरः । परिबृंहितं वृद्धमित्यर्थः ॥ कषेरिति । 'कष हिंसाया'मिति धातुः । कष्ट इति विशेष्यनिघ्नोऽयं शब्दः । अव्ययमपि दृश्यते । 'हा कष्टं मम बान्धवाश्च शतशो नष्टाः' इत्यभियुक्ताः । 'कष्टं विनर्दतः क्रूरान्' इति भट्टिः । कषितं हिंसितमित्यर्थः ॥ घुषिरविशब्दने । घुषिर् अविशब्दने भूवादौ, विशब्दने चुरादौ चोभयः पठ्यते । भूवादेर्विशब्दनेऽसम्भवाच्चुरादेर्णिचा घटितत्वाच्चाविशब्दन इत्यर्थकथनं सम्भवद्विशब्दनार्थं शुद्धं कमपि धातुं निष्ठायामिडभावायापेक्षते । स च णिज्विकल्प एव फलतीतीहायमर्थनिर्देशश्चुरादेर्णिज्विकल्पं ज्ञापयतीत्युक्त्वा भाष्ये —

"महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः ।"

इति प्रयोग उपपत्तिं नीतः । निघृष्ट इति । कण्डूविनयनाय कषित इत्या-

---

१ 'विघुष्टमित्याह' ग. पाठः.

अवघुषितं वाक्यम् । आविष्कृताभिप्रायमित्यर्थः ॥

## अर्देः सन्निविभ्यः (७. २. २४)

एभ्योऽर्देर्निष्ठायामिण् न । दान्तत्वान्नत्वम् । समर्णः । न्यर्णः । व्यर्णः । अर्दितोऽन्यः ॥

## अभेश्चाविदूर्ये (७. २. २५)

आविदूर्यं सामीप्यं, तस्मिन्नर्थेऽभेः परस्यार्देर्नेट् । अभ्यर्णा नगरी ॥

## णेरध्ययने वृत्तम् (७. २. २६)

ण्यन्तस्य वृतेरध्ययनेऽर्थे वृत्तमिति स्यात् । वृत्तो वेदः । अधीत इत्यर्थः । अन्यत्र ण्यन्तादिट् । वर्ति इ त ॥

## निष्ठायां सेटि (६. ४. ५२)

सेटि निष्ठायां परतो णिलोपः स्यात् । तस्मादिडेव श्रूयते । वर्तितम् । केचिदधीते वर्तितमपीच्छन्ति ॥

शयः । अवघुषितम् । चुरादेर्णिजभावपक्ष इदम् । अन्यथा अवघोषितमिति स्यात् ॥ समर्णः । 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति नकारद्वय एकस्य 'हलो यमामि'ति लोप एकणकारमिदं रूपम् । अर्दितोऽन्यः । संनिव्यपूर्वः ।

"अर्दितं कुवलयं रविदीप्तेरर्दितं सरसिजं शशिभासा ।
बन्धुकृत्यमिदमस्तु शुभाय स्वस्य नार्हति परस्य तु हान्यै ॥"

इत्याभाणकीयाः ॥ सामीप्यम् । नातिदूरं नासन्नं वेति दीक्षितचरणाः । सामीप्य इत्येवावचनादेवं निरूपणमिति व्याख्यातारः । 'उपकण्ठान्तिकाभ्यर्णे'-त्यमरः । 'अभ्यर्णानार्दिदद् द्रुतमि'ति भट्टिः ॥ ण्यन्तस्येति । शुद्धस्याकर्मकत्वाद् वृत्तं छन्दस इति भावे क्ते 'यस्य विभाषे'त्येव निषेधः सिध्यति । ण्यन्तस्य तु सकर्मकत्वात् कर्मणि निपातनमिदम् । निपातनं च णिलोपेड्गुणप्रतिषेधार्थमिति वार्त्तिकं, स्मार्तश्च समावर्तनशब्दोऽण्यन्तात् सम्यगध्ययनार्थे द्रष्टव्यः ॥ निष्ठायां सेटि । वर्तितम् । आवर्तितमित्यर्थः । सेटीति किम् ।

---

१. 'पुरी' क. ख. पाठः,

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः (७. २. २७)

णिजन्तानां दमादीनां दान्ताद्या वा निपातिताः ।
दान्तश्च दमितः शान्तः शमितः पूर्णपूरितौ ॥
उपक्षये दसिस्तस्य णिचि दस्तश्च दासितः ।
स्पश बाधन इत्यस्य स्पष्टः स्पाशित इत्यपि ॥[1]

एवं छन्नः छादितः । ज्ञप्तः ज्ञपितः । ज्ञपयतेर्ज्ञानार्थत्वात् तस्य च सनि वेट्त्वात् ज्ञातोऽपि ज्ञप्तः । सर्वत्रेट्पक्षे 'निष्ठायां सेटि'(६-४-५२) इति णिलोपः । अन्यत्र निपातनात् सर्वसिद्धिः ॥

## रुष्यमत्वरसंघुषास्वनाम् (७. २. २८)

संज्ञपितः पशुः । अत्र 'यस्य विभाषे'ति ज्ञपेः क्तेऽनिट्त्वात् णिलोपो मा भूत् । एकाच एव 'यस्य विभाषे'ति निषेधश्चेदेवञ्चानर्थकं सेड्ग्रहणं कालावधारणार्थं विज्ञास्यते — इडागमे कृत एव णिलोपो यथा स्यात् । यद्यकृतेऽपि, तदा कारितमित्यत्र 'एकाच' इति निषेधादनिष्टरूपं प्रसजेदिति । केचिदिति । ये तु शुद्धादेव ण्यर्थवृत्तेः कर्मणि वृत्तो गुणः, वृत्तं पारायणमिति 'यस्य विभाषे'त्ये-वोदित्त्वादिडभावघटितं प्रयोगं साधयन्तः पूर्वसूत्रमप्रयोजनं वदन्ति, तेषां ण्यन्तादनिषेधेन वर्तितमित्यधीतेऽपि भवति ॥ वा दान्तेति । ण्यन्तान्नित्यप्राप्तौ विभाषार्थं निपातनम् । सर्वत्र णिलुगिडभावश्च निपात्येते । यत्तु केचिद् ज्ञपेः 'सनीवे'ति विकल्पाद् 'यस्य विभाषे'ति निषेधे विकल्प इति तदसारं; तत्रैकाच इत्यनुवृत्तेः । 'दुर्दान्तेषु किमक्षैरः', 'शान्तमिदमाश्रमपदम्', 'पूरिताखिलमनोरथः पदपयोरुहप्रणयिनां सताम्', 'विज्ञप्ता गुरवो विनीतशिरसा' इत्याद्युदा-हरणम् । ज्ञपयतेरिति । चौरादिकस्येति शेषः । वेट्त्वादिति । भरज्ञपीत्यत्र सामान्यग्रहणादित्याशयः । ज्ञातोऽपि ज्ञप्त इति । ज्ञातार्थे ज्ञप्त इति साधुरिति भावः । सर्वत्रेट्पक्ष इति । भरज्ञपीत्यत्र पुगन्तस्यैव ग्रहणमित्याश्रित्य चौरादि-कस्य ज्ञपेरग्रहणे तस्य सर्वत्रेडागमे जाग्रतीति यावत् । णिलोप इति । तेन ज्ञातेऽर्थे ज्ञपित इति सिद्धम् । अन्यत्रेति । अनिट्पक्षे । सिद्धिः । णिलो-पादेरिति शेषः ॥ रुष्यमत्वरेत्यादि । रुषेः 'तीषसहे'ति विकल्पे 'यस्ये'ति निषेधे त्वरेः 'आदितश्चे'ति निषेधेऽमिघुष्योरुदात्ततया नित्यप्राप्तौ चोभयत्र विभा-

1. 'पि । च' ग. पाठः.

एषां निष्ठायामनिट्त्वं वा स्यात् । रुष्टः, रुषितः । 'अम गत्यादौ रोगे च' । 'अनुनासिकस्य—' (६-४-१५) इति दीर्घः । आन्तः, अमितः । 'ज्वरत्वर—'(६-४-२०) इति झल्यूठ् । 'रदाभ्यां—' (८-२-४२) इति नः । तूर्णः, त्वरितः । संघुष्टः, संघुषितः । आस्वान्तः, आस्वनितः ॥

## हृषेर्लोमसु (७. २. २९)

लोमसम्बद्धेऽर्थे हृषेर्निष्ठायां वेट् । हृष्टं हृषितं वा रोम केशाश्च । लोमस्विति केशा अप्युक्ताः । तेष्वपि पुलकः स्यादेव । 'विस्मितप्रतिहतयोश्चेति वाच्यम्' (वा० ७.२.२९) हृष्टो हृषितो वा विक्रमैः । हृष्टा हृषिता वा दन्ताः । भग्नाः शीतार्दिता वा ॥

---

षेयम् । तूर्ण इति । 'ञित्वरे'त्यादित्त्वमात्मनेपदातिरिक्तप्रयोजनविरहान्मन्दमिति दीक्षितचरणाः । सङ्घुष्टः सङ्घुषित इति । 'घुषेरिट्प्रतिषेधस्यावकाशः — असम्पूर्वादविशब्दनं — घुष्टा रज्जुः, घुष्टो मार्गः । वावचनस्यावकाशः — सम्पूर्वाद् विशब्दनं — संघुष्टं वाक्यं, संघुषितं वाक्यम् । सम्पूर्वादविशब्दन उभयं प्राप्नोति — संघुष्टा रज्जुः , संघुषिता रज्जुः' इति भाष्यम् । उभयं प्राप्नोतीत्यस्य परत्वादनेन विकल्पेनेड् भवति न भवति चेत्यर्थः । आस्वनित इति । आस्वनितं मन इत्यपि । 'क्षुब्धस्वान्ते'ति निपातनं बाधित्वा परत्वात् तत्राप्ययं विकल्पः प्रवर्तते । एवं दमितादीन् शब्दान् भट्टिर्लक्षयति —

"दमितारिः प्रशान्ताजौ नादापूरितदिङ्मुखः ।
जघान रुषितो रुष्टांस्त्वरितस्तूर्णमागतान् ॥
तेषां निहन्यमानानां सङ्घुष्टैः कर्णभेदिभिः ।
अभूदभ्यमितत्रासमास्वान्ताशेषदिग् जगत् ॥"

लोमसम्बद्धेऽर्थ इति । सम्बन्धश्चायं कर्तृतया लोम्नां बोध्यः । भाष्यवार्त्तिके 'लोमकेशकर्तृकस्ये'ति स्पष्टमेवोच्यते । लोमेति मूर्धजानामङ्गजानां च सामान्यग्रहणम् । 'लोमनखं स्पृष्ट्वा शौचं कर्तव्यमि'ति विधेः केशस्पर्शेऽपि सञ्चारो दृश्यत एव हि । हर्षवशात् केशेष्वपि पुलकोद्गमसम्भवाल्लोमोदयोऽस्त्येव । तदुच्यते—तेष्वपि पुलकः स्यादेवेति । 'हृषु अलीके' इत्युदित्त्वादनिटः, 'हृष तुष्टावि'ति सेटश्चोभयत्रविभाषार्थं वचनम् । प्रति-

अपचितश्च (७. २. ३०)

चायेर्निष्ठायामपचित इति वा स्यात् । विकल्पादपचायितः पूजित इत्यर्थः ॥

इण् निष्ठायाम् (७. २. ४७)

निष्कुषेर्निष्ठायां नित्यमिट् स्यात् । निष्कुषितः ॥

क्लिशः क्त्वानिष्ठयोः (७. २. ५०)

इड् वा स्यात् । क्लिष्टः क्लिशितः ॥[1]

पूङश्च (७. २. ५१)

क्त्वानिष्ठयोर्वेट् ॥

पूङः क्त्वा च (१. २. २२)

अस्मात् परा सेण्निष्ठा क्त्वा च किन्न स्यात् । तेनेट्पक्षे गुणः । पूतः, पवितः ॥

---

हतयोरिति । प्रतिघातयोरि'ति मुद्रितभाष्ये पाठः । तदा हषितं दन्तैरिति प्रयोगोऽपि स्वारसिकः सिध्यति ॥ चायेरिति । 'चायृ पूजानिशामनयोरि'ति धातोः । क्तिनि च नित्यम् । अपचितिरित्येव । चिनोतेर्वा अपपूर्वस्य पूजार्थतयापि शक्यसम्पादने अमू रूपे । तदंशे चायेः खिलताभ्युपगमादित्यपि लक्ष्यचक्षुषां शक्यमास्थातुम् । 'पूजा नमस्यापचितिरि'त्यमरः ।

"भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः ।
क्षणेन क्षीणविक्रान्ताः कपिनानेषत क्षयम् ॥"

इति भट्टिः ॥ निष्कुषेरिति । 'निरः कुष' इति पूर्वसूत्रं समग्रमनुवर्तते । नित्यमिति । इड्ग्रहणे वर्तमाने पुनरिड्ग्रहणादित्याशयः ॥ क्लिश इति । 'क्लिशू विबाधने', 'क्लिश उपतापे' इत्येतयोः सामान्यग्रहणम् । अनयोः पूर्वस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां 'यस्ये'ति निषेधे, द्वितीयस्य सेट्त्वान्नित्यप्राप्तौ वचनमिदमुभयोः क्त्वानिष्ठयोः । पूङश्च । 'श्र्युक' इति निषेधे विकल्पवचनम् ।

---

१. 'योः । क्लिष्टः' ग. पाठः.

## वसतिक्षुधोरिट् (७. २. ५२)

अनयोः क्त्वानिष्ठयोर्नित्यमिट् स्यात् । क्षुधितः । यजादित्वादुत्वम् । 'शासिवसि—'(८-३-६०) इति षत्वम् । उषितः ॥

## अञ्चेः पूजायाम् (७. २. ५३)

पूजार्थस्याञ्चेः क्त्वानिष्ठयोरिट् स्यात् । अञ्चितो हरिः । अत्र 'अनिदितां—' (६-४-२४) इति नलोपे प्राप्ते,

## नाञ्चेः पूजायाम् (६. ४. ३०)

पूजार्थस्याञ्चेर्नलोपो न ॥

## लुभो विमोहने (७. २. ५४)

अस्य व्याकुलीकरणेऽर्थे क्त्वानिष्ठयोरिट् स्यात् । लुभिताः केशाः । अन्यत्र 'तीषसह—'(७-२-४८) इत्युक्तम् । लुब्धः । * इतीट्कथा ॥

'पूतं पवित्रेण' । ऋगन्त्रः ॥ वसतीति । निर्देशार्थ एवायं विकरणः । अन्यस्य वस्तेस्तूदात्तत्वादिड् भवत्येवेति पुनः प्रापणं नापेक्ष्यते । नित्यमिति । पुनरिड्ग्रहणाद् । क्षुधितः, उषित इति । 'क्षुधितस्येव समस्तमीप्सितम्' इति नीतिः । 'सुचिरमुषितं दीर्घापाङ्ग्या' इति भावकाः ॥ अञ्चेरिति । उदित्त्वात् क्त्वायां विकल्पे 'यस्ये'ति निष्ठायां निषेधे च प्राप्ते वचनमिदम् ।

"अञ्चितः पुरवधूदृगञ्चलैः सञ्चरन्नरिविरञ्जको हरिः ।"

अनिदितामिति । यद्वागमपरिभाषया इविशिष्टस्य क्तस्य किंत्वमस्तीति विचारः । परिभाषाप्रत्याख्यानेऽप्यत एव स्थानिगतानुबन्धाश्रयेऽपि स्थानिवद्भावः । पूजार्थस्याञ्चतेरिति सामान्यकथनाद् अञ्च्यते हरिरिति कर्मणि यकि नलोपो न । पूजायां किम् । उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः ॥ लुभो विमोहने । 'तीषसहलुभे'ति क्त्वायां विकल्पे 'यस्ये'ति निष्ठायां निषेधे च वचनमर्थविशेषे । लुभिताः केशाः । आकुलीकृता इत्यर्थः । अन्यत्र लुब्धः शीतेन । पीडित इत्यर्थः । गृध्नुर्वा लुब्धः । क्त्वायां तु गार्ध्ये लुब्ध्वा, लुभित्वा, लोभित्वेति च रूपाणि । इतीट्कथा ।

१. 'षः ।' क ख. पाठः

* 'इति निष्ठायामिट्कथा' इति केरलवर्मसम्मतः पाठः ।

अथावशिष्टकार्याणि । 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' (१-२-१९) इति सेटो निष्ठायाः कित्त्वनिषेधाद् गुणः । शयितः । अत्र निष्ठेति विभागाद् भौवादिकस्य डयतेरप्यकित्त्वाद् गुणः । डयितः । श्यनि डीङ एवेण्निषेधः । स्विदादीनामादित्त्वाद् भावादिकर्मणोर्वेट् । अत्र सेट्पक्षे कित्त्वाभावः । स्विद्दा, स्वेदितमनेन । 'ञिमिदा स्नेहने', मेदितम् । 'ञिक्ष्विदा स्नेहनमोचनयोः शब्दे च', क्ष्वेदितम् । धर्षितमनेन । अनिट्त्वे तु कित्त्वमेव । स्विन्नमनेन । मिन्नम् । क्ष्विण्णम् । धृष्टम् । एवमादिकर्मण्यपि प्रस्वेदितः प्रस्विन्न इत्यादि ॥

## मृषस्तितिक्षायाम् (१. २. २०)

क्षमार्थस्य मृषेः सेट् निष्ठा न कित् स्यात् । मर्षितः क्षान्तः । अन्यत्रापमृषितं वाक्यम् । अस्पष्टमित्यर्थः ॥

## उदुपधाद् भावादिकर्मणोरन्यतरस्याम् (१. २. २१)

अथावशिष्टकार्याणि । इडनुबन्धीनीति यावत् । शयितः । शीत इति श्यैङ्धातो रूपम् ।

> "नेदं नभोमण्डलमम्बुराशि-
> र्नैमाश्च तारा नवफेनखण्डाः ।
> नायं शशी कुण्डलितः फणीन्द्रो
> नायं कलङ्कः शयितो मुरारिः ॥"

इति बिल्हणः । अनुबन्धनिर्देशाद् यङ्लुकि न । यथा शेशियतम् । विभागादिति । इदं सीरदेवादिमतेन । पारायणिकाश्चेदमङ्गीकुर्वते । भौवादिकस्येति । दैवादिकस्य स्वाद्यन्तर्भाविनोदित्त्वात् तत्सामर्थ्येनेडभावो नत्वं च । डीनः; डीनवान् । डयतेरपीति । माधवस्तु योगविभागाड्डुयितमित्यपीत्याह । तन्मते ड्यितमित्यपि सम्भाव्यते यथा । श्यनि डीङ एवेति । श्यन्विकरणस्य डीङ एवेत्यर्थः । स्विन्नं मिन्नमिति । अनिट्त्वाद् 'रदाभ्या'मिति नत्वम् । प्रस्वेदित इति । कर्तरि क्तः । आदिकर्मद्योतकः प्रः । 'परिमिलन् प्रस्वेदितो माधवः' इति रासवर्णने ॥ क्षान्त इति । इदं शुद्धस्य मृषेरिति द्योतयितुम् । ण्यन्ते तु विनाप्यकित्त्वं धातुरेव मर्षिरिति सिद्धं मर्षित इति । अपमृषितमिति । तितिक्षान्यस्यार्थस्योपसर्गसमभिव्याहार एव बोध इति यावत् । तितिक्षार्थस्य मृषेः

---

१. 'न । अनि' ख. पाठः.

उदुपधाद् धातोः परा भावादिकर्मणोः सेण् निष्ठा वा न कित् स्यात् । मुदितं मोदितं वानेन । प्रमुदितः प्रमोदितः । शब्विकरणानामेव विकल्पः । तेन रुदेर्लुग्गतस्य रुदितमनेनेति कित्त्वमेव ॥

## अदो जग्धिर्ल्यप्तिकिति (२. ४. ३६)

ल्यपि तादौ किति च परे अदेर्जग्धिः स्यात् । इकार उच्चारणार्थः । जग्ध् त । 'झषस्तथोः—'(८-२-४०) इति धः । 'झरो झरि—' (८-४-६५) इति पूर्वधलोपः । जग्धः । जग्धवान् । 'अन्नाण्णः' (४-४-८५) इति निपातनेन जग्ध्यभावादघोऽप्यपरोक्तः ॥

## स्फायः स्फी निष्ठायाम् (६. १. २२)

स्फीतम् । वेति कौमुदी । स्फातम् ॥

## शृतं पाके (६. १. २७)

विक्लित्तिर्विक्लेदना च पाकः । तत्रार्थे शृतमिति स्यात् । शृतं क्षीरं

---

पुनस्तितिक्षायामिति सूत्रेऽर्थनिर्देशो ज्ञापयति धातवोऽनेकार्था इति ॥ शब्विकरणानामेवेति । 'व्यवस्थितविभाषा चेयमि'ति काशिका । उदुपधादिति किमिति चोदयित्वा लिखितमनेनेति प्रत्युदाहरता काशिकाकारेण शब्विकरणानामेवेति व्यवस्थाया अस्थितत्वमभिव्यज्यते । अन्यथा व्यवस्थया तुदादेर्लिखेरसिद्धेः । एवं प्रभुक्त इत्यपि प्रत्युदाहरणं विमृश्यम् । तस्मात् खिटकिटी इति भौवादिकस्य कुशेश्च निष्ठायां यथाक्रमं प्रत्युदाहरणं देयमिति हरदत्तः साधुः ॥ अदो जग्धिर्ल्यप्तिकितीति । निष्ठायां प्रकृत्यादेशप्रकरणमुपक्रम्यते । ल्यपि प्रजग्ध्य । अन्तरङ्गत्वाद् क्त्वायामेव जग्धेः सिद्धौ ल्यपीति विधानं ल्यपान्तरङ्गाणां बाधनं ज्ञाप्यते । तेन प्रधाय प्रस्थायेत्यादि सिद्धम् । हिप्रभृतीनामादेशानामपहरणं फलम् । तदिदमुच्यते भाष्ये कारिकया —

"जग्धिविधिर्ल्यपि तत्तदकस्मात्

सिद्धमदस्तिकितीतिविधानात् ।

हिप्रभृतींस्तु सदा बहिरङ्गो

ल्यब्भरतीति कृते तदु विद्धि ॥"

स्फीतमिति । 'स्फीतं यशो दिक्षु विदिक्षु नीतमि'ति ॥ विक्लेदना चेति । 'श्रा पाके' इत्यत्रत्यः पाकशब्द ओदनादिनिष्ठाया विक्लित्तेर्द्रवद्रव्यादि-

स्वयम्। शृतं क्षीरमनेन। एवं शृतं हविः। क्षीरहविषोरेवेष्टम्। हवि-रित्याज्यमप्युक्तमित्येके। अन्यत्र श्राणमन्नम्। यण्वत्त्वान्नत्वम्॥

प्यायः पी (६. १. २८)

पीनः कुचः। पीनवान्। 'ओ प्यायी वृद्धावि'त्योदित्त्वान्नत्वम्। स्वाङ्गादन्यत्र पीभावो वेति कौमुदी। पीनः प्यानो वा तरुः। अ-नुपसर्गस्यैव पीभावः अन्यत्र। आप्यानश्चन्द्रः। आङ्पूर्वस्य कूपोधसोः स्यादेव। पूर्ण आपीनः कूपः। आपीनमूधः। 'आपीनतुङ्गस्तनीमि'ति

---

निष्ठाया विक्लेदनायाश्च समानोऽभिधायक इत्याशयः। उभयत्रापि पच्यत ओदनः स्वयमेव, पचत्योदनं देवदत्त इति प्रयोगदर्शनात्। अतः शुद्धस्य विक्लृत्तौ विद्यमानस्य प्राथमिकप्रयोजकभावापन्नस्य विक्लेदनायां विद्यमानस्य च श्राधातोः शृभावो निपात्यत इति फलितम्। तदिदमुच्यते काशिकायां — ण्यन्त-स्याण्यन्तस्य चेति। अत एवोदाहरति शृतं क्षीरं स्वयमिति, शृतं क्षीरमनेनेति च। आद्ये कर्तरि क्तान्तम्। तस्मात् प्रेषणांशघटिते पुनर्णिचि श्रपितमित्येव। एतावता फलितमिदं — शुद्धे प्राथमिके णिचि च श्राश्रप्योः शृतमिति। पुनः प्रेषणाधिक्ये द्वितीये णिचि श्रपितमिति। एतत्साधकं च वचनं भाष्ये — 'श्राश्रप्योः शृभावः। श्रपेः शृतमन्यत्र हेतोः' इति च। इष्टमिति। 'व्यव-स्थितविभाषा चेयमि'ति काशिका। इदं 'क्षीरहविषोरिति वक्तव्यमि'ति भाष्य-वचनसिद्धम्। तदिदमुदाह्रियते — अन्यत्र श्राणमन्नमिति। पाकार्थस्यैव धातोः पुनः पाकग्रहणं विषयप्रदर्शनार्थमित्यभिमत्य ततः सिद्धं क्षीरहविषोरितीति केचित्। आज्यमपीति। तथाच भाष्योदाहरणं — 'शृतं क्षीरं घृतं हविरि'ति। नत्वमिति। निष्ठातस्येति शेषः॥ पीन इति। पीनो देवदत्तो दिवा न भुङ्क्ते इति लक्षणायाम्। तरुरिति। कुचादिवत् स्वाङ्गताविरहात्। अनुपसर्गस्यै-वेति। 'आङ्पूर्वादन्धूधसोरि'ति भाष्येण आङ्पूर्वादन्धूधसोरेव, आङ्पूर्वादे-वान्धूधसोरित्युभयतो नियमादुपसर्गान्तरयोगेऽन्धूधसोरन्यत्र च नेत्याशयः। तेन सिद्धमुदाह्रियते — आप्यानश्चन्द्र इति। अत्रान्धूधोभिन्नत्वान्न। एवं प्रप्यानोऽन्धुरित्याङ्भिन्न उदाहार्यः। कूपोधसोरिति। अन्धुशब्दे पर्यायग्रहण-माभिप्रेत्येदम्। पूर्ण इति। आङ्योगस्य फलमिदमर्थविवरणेन प्रदर्श्यते।

चिन्त्यम् । आङः पुनः समासाद् वा सिद्धिः * । 'ज्वरत्वर—' (६-४-२०) इति झल्यूठ् । रात्वम् । ञित्वरा, तूर्णः । स्रिवु, स्रूतः । अन्येषां सेट्त्वादूठ् । ज्वरितः । अवितः । मवितः ॥

पीडाव्याध्योः प्रदीपोक्ता लङ्गिकम्प्योर्नलोपिता ।
निःस्वो विलगितो नित्यं वाताद् विकपिता तनुः ॥

विकपितो विकृतशरीर इति माधवः । अन्यत्र लङ्गितः । कम्पितः । लङ्गिर्गतौ ॥

**अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति (६. ४. ३७)**

यमिरमिनमिगमिहनिमन्यतयोऽनुदात्ताः । तेषां तनेस्तनोत्यादीनां च झलादौ क्ङिति परेऽनुनासिकलोपः स्यात् । य त । आर्धधातुकपरत्वादतो लोपे प्राप्ते,

---

चिन्त्यमिति । स्तनस्यान्धूधसोरन्यत्वादित्यादिः । पुनरिति । पीनतुङ्गस्तनीमिति समासे जातेऽनन्तरं गतिप्रादयश्चेत्याङा समास इति यावत् । ञित्वरेति । आदित्त्वादनिट्त्वेन झल्परत्वसम्भव इत्याशयः । स्रिवु । उदित्वादनिट्त्वसूचनार्थमनुबन्धसहितः पाठः । प्रदीपोक्तेति । कैयटकृतप्रदीपोक्तेति भावः । 'पीडाव्याध्योर्भाष्यदृष्टे'त्येव सुवचम् । 'अनिदितां नलोपे लङ्गिकम्प्योरुपताप-शरीरविकारयोरुपसङ्ख्यानम्' इति भाष्य एवास्यार्थस्य प्रकटं दर्शनात् । पीडा दारिद्र्यपीडेत्यर्थः । तदुदाहरणमिदं — निःस्वो विलगित इति । वातादिति । वातकिनः स्वस्यानुभवघटितमिदं वचनम् । कम्पितश्चलितः । 'कपिकम्पितशाखाभ्य' इति कालिदासः ॥ लङ्गिकम्प्योर्नलोपप्रसङ्गात् प्रसक्तानुप्रसक्त्यानुनासिकलोपं स्मरंस्तद्विधायकं शास्त्रं व्याचिख्यासुरवतारयति — अनुदात्तोपदेश इत्यादि । तनोत्यादीनामिति ।

तनु-क्षणु-क्षिणु-ऋणु-तृणु-घृणु-वनु-मन्वन्तिमस्तनोत्यादिः ।

इतीमे तनोत्यादयः । सूत्रे वनतीति पाठाद् भौवादिकस्य चतुष्टयस्यापि ग्रहणम् । य त इति । यम्धातो रूपम् । आर्धधातुकपरत्वादिति । आर्धधातुकोपदेशे यदकारान्तमिति विवरणमाश्रयतां तु नेह प्रसक्तिः । सूत्रे षष्ठ्यन्तत्वेन प्रकृतिग्रहणं शान्तदान्तादौ मा भूदिति । 'शान्तमिदमाश्रमपदमि'ति

---

* आपीने ऊधसी इव तुङ्गौ स्तनौ यस्या इत्यर्थाद्वा । 'ऊधस्तु क्लीबमापीनमि'त्यमरः ।

## असिद्धवदत्रा भात् (६. ४. २२)

आभलोपादि पादान्तमाभाच्छास्त्राणि तेषु तु।
प्राप्तेषु तान्येवान्योन्यमसिद्धान्येकसंश्रये॥

इत्यनुनासिकलोपस्यासिद्धत्वादतो लोपो न। द्वयोः क्त्वाश्रयत्वादेकाश्रयत्वम्। यतः। रतः। नतः। गतः। हतः। मतः। 'वन शब्दे'।

---

कालिदासः। वनतेः क्तिनि वतिरिति। क्तिचि तु 'न क्तिचि दीर्घश्चे'ति वन्तिरिति रूपम्। 'अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि, वामः' इति भाष्यम्। अतो 'वा ल्यपी'त्यस्यापि विषयः सङ्गृहीतः। तेन अभिमत्य, वितत्येति, प्रणत्य प्रणम्य, प्रयत्य प्रयम्य, अवगत्य अवगम्येत्यादि च सिध्यति॥ आभलोपादीति। अयमसिद्धवदत्राभादिति सूत्रस्य कारिकया विवरणोपक्रमः। 'आभादि'त्यधिकारसीमानिर्देशः। तदुच्यते — आभलोपादि पादान्तमिति। तावत्पर्यन्तं आधिकारसत्त्वादित्याशयः। उपक्रमसीमा तूपस्थितत्वात् प्रकृतसूत्रमेव। असिद्धानीति। कार्यार्थमसिद्धवद् गण्यन्त इत्यर्थः। सूत्रे वद्ग्रहणं स्पष्टार्थं, स्थानिवदित्यादाविव। विनापि वद्ग्रहणं 'पूर्वत्रासिद्धमि'त्यादावर्थप्रतिपत्तिर्नान्तरीयसिद्धा। एकसंश्रय इति। इदमत्रग्रहणलभ्यम्। समानाश्रय इति सिद्धान्तकौमुदी। 'असिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चे'ति भाष्यम्। तेन आगहि जहि इत्यत्रानुनासिकलोपे जभावे चातो लोपः, 'अतो हेरि'ति च प्राप्नुवन् विधिरादेशयोरसिद्धत्वात् प्रतिषिध्यते। तथा एधि शाधीत्यत्रास्तिशास्त्योरेत्वशाभावयोः कृतयोरसिद्धत्वाद् झलक्षणं धित्वमुत्सर्गः प्राप्नोति च।

एधि चित्रावतार! त्वमेधितश्रीपराक्रमः।
शाधि वञ्चिधरामेनां बाधितारिः शतं समाः॥

आभादित्यभावेऽभाजि, राग इत्यादावनाभीयेऽपि नलोपस्य वृद्धावसिद्धत्वं स्यात्। अत्रग्रहणं किम्। पपुष इत्यत्र पाधातोर्लिटः क्वसौ शसि सम्प्रसारणे उत्तरदलगतस्याकारस्यालोपे सम्प्रसारणमसिद्धं न भवति। भेऽजादिपरकत्वादालोपोऽभीष्टः सिध्यति च। 'ददुषि रेवतभूभृति रेवतीम्'

---

१. 'त' ग. पाठः.

अस्य निष्ठायां सेट्त्वेनाझलादित्वाद् वक्ष्यमाणेऽनिटि क्तिन्येवोदाहृतिः । वतिः । तनादेः । ततः । 'तृणु अदने' । तृतः ॥

## जनसनखनां सञ्झलोः (६. ४. ४२)

एषां झलादौ सनि झलादौ क्ङिति चान्त्यस्य आत्वं स्यात् । जातः । 'षणु दाने' । सातः । खातः । 'निष्ठायां सेटि' (६-४ ५२) इति सर्वण्यन्तेषु णिलोपः । चोरितः । कारितः । 'ह्लादी सुखे च' । ईदित्वान्नेट् ।

## ह्लादो निष्ठायाम् (६. ४. ९५)

ह्रस्वः स्यात् । नत्वम् आह्लन्नः । 'घुमास्थ ' (६-४-३६) इतीत्वम् । धेट्, धीतम् । गीतम् । पीतम् । पानावसानार्थयोः पासाधात्वोर्ग्रहः । तेन शोषे त्राणे च पातम् । क्षये सातम् ॥

---

इति नारायणीयम् । वन शब्द इति । उदिदनुदिदिति वनधातुर्द्विविधः । तत्रोदितो 'यस्य विभाषे'तीडभावपक्षे वतिः वतवानित्युदाहरणम् । 'वन शब्द इत्यनुदितस्तु सेट्त्वात् 'तितुत्रतथसिसुसरकसेषु च' इति सूत्रेणेण्निषेधे क्तिनीडभावं वक्ष्यमाणमाश्रित्योदाहरणं घटनीयम् । तदाह — वक्ष्यमाणेऽनिटीत्यादिना ॥ जनसनेति । अनुनासिकान्तेषु क्वचिदनुनासिकस्य निरूपणायेदम् । झलादाविति । इदम् 'अनुदात्तोपदेश'त्यतोऽनुवृत्तिलब्धस्य झलीत्यस्य फलम् । अन्यथा जिजनिषतीत्यादावप्यात्वं स्यात् । सागमे हि सन्त्वाविशेषादित्याशयः । जात इति ।

'जातं वंशे भुवनविदिते पुष्कलावर्तकानाम्' इति मेघे । सनि सिषासतीत्युदाहरणम् । निष्ठायां सेटीति । सेट्ग्रहणं संज्ञपितः पशुरित्यादौ लोपो मा भूत् । 'सनीवे'ति विकल्पितेट्कत्वाद् 'यस्य विभाषे'तीडभावः । 'यस्य विभाषे'त्यत्रैकाज्ग्रहणं वदतां तु कारितं चोरितमित्यादाविडागमासिद्धयेऽत्रत्यसेड्ग्रहणसामर्थ्यादिडागमे कृत एव णिलोप इति कालावधारणमाश्रयणीयम् । 'न्याये पदं कारितः' इति नीतिः ॥ ह्लादो निष्ठायाम् । निष्ठायामित्यस्य फलं प्रह्लादादौ घञादिषु ह्रस्वाभावः । पानावसानार्थयोरिति । इदमर्थो-

---

१. 'तिः । त' ख. पाठः. २. 'शी' क. पाठः.

## द्यतिस्यतिमास्थामित् ति किति (७. ४. ४०)

एषां तादौ किति परे इत् स्यात् । दितः खण्डितः । अवसितः । प्रमितः । स्थितः ॥

## शाच्छोरन्यतरस्याम् (७. ४. ४१)

तनूकरणच्छेदनार्थयोः शाच्छोस्तादौ कितीत्वं वा स्यात् । शितं शातं वा शस्त्रम् । छितं छातम् । संशितं इति व्रते नित्यम् । अत्र हरः 'संशितो व्रते यत्नवान् । संशितव्रत इत्यत्र तु सम्यक् सम्पादितव्रत इत्यर्थः' इति ॥

---

पाधिकं वचनम् । 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्ये'ति परिभाषया न्यासे 'षोऽन्तकर्मणी'त्यस्यैव ग्रहणाच्च 'पा रक्षणे', 'पै शोषणे', 'षै क्षये' इति धातूनां न ग्रहणमिति तत्त्वम् ।

'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या'

इति कालिदासः ।

"भगवद्गीता किञ्चिदधीता
गङ्गाजललवकणिका पीता"

इति जगद्गुरुः ॥ ति कितीति । तीत्यस्याभावे अवदाय, अवसायेत्यादावपि स्यात् । कितीति तु स्थाता मातेत्यादाविदादेशवारणाय । अवसित इति । 'घुमास्थे'तीत्वस्य प्रवेशः सेपीयत इत्यादावतकारादौ बोध्यः । 'अवसितमागमनप्रयोजनमि'ति मुद्रा । 'अनुमितोऽयमर्थः प्रागेवे'ति चण्डी । 'स्थितः स्थितामुच्चलितः प्रयातामि'ति रघुवंशम् ॥ तनूकरणच्छेदनेति । स्पष्टप्रतिपत्तयेऽर्थकथनम् । शितमिति । तीक्ष्णमित्यर्थः । शातमिति । तनूकरणमाश्रित्य कृशोदर्यां शातोदरीत्यपि । नित्यमिति । 'श्यतेरित्वं व्रते नित्यमि'ति वचनादिति शेषः । संशितो ब्राह्मणः । वचनं तु व्यवस्थितविभाषामाश्रित्य प्रत्याख्यातं तत्रैव ।

"देवव्रातो गलेग्राह इति योगे च सद्विधिः ।
मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतः ॥"

इति । संशितव्रत इति । वचने व्रतस्य विषयत्वेनैव प्रवेशो मोत्तर-

---

१. 'तमिति', २. 'स्थपि व्र' ग. पाठः.

### दधातेर्हिः (७. ४. ४२)

तादौ कितीत्येव। हितो भारः विहितः॥

### दो दद् घोः (७. ४. ४६)

घुसंज्ञस्य दाधातोस्तादौ किति परे दत् स्यात्। दत्तः, दत्तवान्। दाप्दैपोस्त्वघुत्वान्न दातम् अवदातम्॥

### अच उपसर्गात् तः (७. ४. ४७)

अजन्तादुपसर्गात् परे घुसंज्ञकदाधातोराकारस्य तकारः स्यात्। दस्य चर्त्वम्। तत्र 'अनचि च' (८.४.४७) इति द्वित्वे चत्वारस्तकाराः। द्विः 'झरो झरि —' (८.४.६५) इति लोपे द्वयशेषः। प्रत्तः अवत्तः॥

### दस्ति (६. ३. १२४)

दाधातोस्तकारादौ परे इगन्तोपसर्गस्य दीर्घः स्यात्। परीत्तम् अनूत्तम्। 'सु[illegible]' इति [illegible]आह भोजः। सुदत्तं सूत्तमित्यादि। 'प्रादादि[illegible]' इति च। [illegible]नुसारख्यम्। प्रदत्तं प्रत्तं वा। अन्यत्र प्रत्तमेवेति॥

---

पदत्वेन घटनायामपि। तत उदाहरणं द्विविधं सम्भवि। सांशितः, संशितव्रत इति च। तत्रोभयत्राप्यर्थता विवरणं व्रते यत्नवानित्यादिना॥ विहित इति। 'विहितां प्रियया मनःप्रियामि'ति किरातार्जुनीयम्॥ दः इति। अन्यथा धेट् पान इत्यस्यापि स्यात्। इष्यते तु धीतः धीतवानिति। अवदातमिति। 'अवदातः सितो गौर' इत्यमरः॥ अच उपसर्गात्तः। अच इति निर्दत्तमित्यादौ वारणाय। उपसर्गादिति केवले दत्ते मा भूत्। घोरित्यवदाते दैपो मा भूत्। अत्र 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयानि'त्यास्थाय दाधातोराद्यस्य दकारस्य स्थानित्वमाशङ्क्य तन्निवारणायाच इत्यावर्त्यैकमुपसर्गं विशेषयत्यपरं स्थानिनं निर्दिशतीत्याचक्षते वृत्तिकाराः॥ इगन्तोपसर्गस्येति। 'उपसर्गस्य घञ्यमनुष्य' इत्यत उपसर्गस्येति, 'इकः काश' इत्यत इक इति चानुवर्तेते। तकारपरकत्वं चर्त्वे आश्रयात् सिद्धं वेदितव्यम्।

## सुयजोर्ङ्वनिप् (३. २. १०३)

सुनोतियज्योर्भूते ङ्वनिप् स्यात् । ङित्वादगुणः । पित्वात् तुक् । सुत्वा यज्वा ॥

## जीर्यतेरतृन् (३. २. १०४)

नः स्वरार्थः । ऋकार उगित्त्वार्थः । जॄ अतृ, गुणः, जरत् । सौ कृते उगित्वान्नुम् । संयोगान्तलोपः, जरन् जीर्णवानित्यर्थः ॥

सूत्रवार्तिकभाष्येषु छान्दसावेव केवलम् ।
कानचृक्कसू इति व्यक्तं साधितं माधवादिभिः ॥
लोकेऽपि द्वयमस्तीति कौमुदी यावदीति सा ।
क्वसुरेव तु लोकेऽस्तीत्युदितं भोजभूभुजा ॥

तद्वशाद् बहुप्रयोगाच्च लिटः क्वसुरुच्यते ।

---

भोज इति । अंशत एतत्फलितार्थकथनपरा काचिदियमुदाहरणकारिका—

"अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥"

इति । अन्यत्रेति । प्रकृष्टार्थे ॥ भूत इति । 'वर्तमाने लडि'ति यावत् तदधिकारात् ।

"शरण्ये सुत्वनामस्मि महीमेवमवत्यपि ।
यज्वनो मे हृता गावश्चोरैर्भाग्यविपर्ययात् ॥"

इति सुभद्राहरणम् । 'यज्वा तु विधिनेष्टवानि'त्यमरः । गुण इति । 'ऋत इदि'त्यन्तरङ्गतया प्राप्तमित्वं तु 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेने'ति वचनाद् बाध्यते । 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति वचनतः प्राप्तमन्तरङ्गस्य बलवत्त्वं भाष्यवार्तिकबलात् पराभ्यामपि गुणवृद्धिभ्यामिह विहन्यत इति सारम् ॥ जरन्निति । 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेने'ति भगवान् पाणिनिः । जरन्नैयायिकः । जरन्मीमांसकः । सूत्रवार्त्तिकेत्यादि । 'छन्दसि लिडि'ति पूर्वतः 'भाषायां सदवसश्रुवः' इति परतश्च दर्शनान्मध्यविहितौ कानच्क्वसू छन्दस्येवेति सूत्रमस्था-

## परोक्षे लिट् (३. २. ११५)

भूतानद्यतनपरोक्षेऽर्थे धातोर्लिट् स्यात् । पच् लिट्,

## क्वसुश्च (३. २. १०७)

लिटः क्वसुर्वा स्यात् । उकार उगित्त्वार्थः । कित्त्वमगुणाद्यर्थम् । 'तङानावात्मनेपदम्'(१-४-१००) इत्यात्मनेपदिना कानज्विषयत्वात् परस्मैपदिनामेव क्वसुः । पच् वस् ,

## स्थानिवदादेशोऽनल्विधौ (१. १. ५६)

आदेशः स्थानिवत् कार्यं लभते । स्थान्यलाश्रयं तु कार्यं न । इति क्वसोर्लिट्कार्यम् ॥

---

नादवगम्यते । 'कानच्क्वस्वोर्विवचनं छन्दसि' इति वार्तिकं, 'छान्दसौ कानच्-क्वसू' इति भाष्यं च । कौमुदी—प्रक्रियाकौमुदी । "भाषायां तु बहुलं प्रयुज्यते— 'तं तस्थिवांसं नगरोपकण्ठे' 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इति सिद्धान्त-कौमुदी । 'बिभाषा पूर्वाह्णापराह्णे'ति सूत्रे [illegible] प्रयोगदर्शनाल्लोकेऽपि क्वचित् कसोः साधुत्वमुक्तम् ॥ भूतानद्यतनपरोक्षेऽर्थे इति । भूत इत्यधिकारे 'अनद्यतने लङि'त्यतोऽनद्यतन इत्यनुवर्तते । परोक्ष इति च वर्तते । धातोरर्थश्च क्रिया । तस्याश्च परोक्षत्वं तदाश्रितकारकाणामनन्वयं बोध्यम् । उत्तमपुरुषे च चित्तव्याक्षेपादिना परोक्षत्वं बोध्यम् ।

"बहु जगद पुरस्तात् तस्य मत्ता किलाहं
चकर च किल चाटु प्रौढयोषिद्वदस्य"

इति माघः ॥ उगित्त्वार्थ इति । उगित्त्वं ङीब्नुमोरर्थं । अगुणाद्यर्थमिति । आदिपदेन शुश्रुवांसमित्यादौ 'श्र्युकः किती'तीण्निषेधार्थमपि । स्थानिव-दिति । स्थान्यादेशयोर्भिन्नत्वाल्लिडादेशे क्वसौ कानचि च लिट्कार्यं द्वित्वादि सम्पादयितुमयमतिदेश इह प्रस्तुतः । स्थानिना तुल्यं स्थानिवत् । स्थानिप्र-युक्तं कार्यमादेशेऽप्यतिदिश्यते, यदि तत् कार्यं स्थानिगतमेकमलं नाश्रयते । यथा—अस्तेर्भूः । स्थानिवद्भावाद् भुवो धातुत्वप्रयुक्तानि कार्याणि । अन-ल्विधाविति किम् । द्यौः, पन्थाः । अत्र स्थानिगतमलं वकारं नकारं चाश्रित्य

## लिटि धातोरनभ्यासस्य (६. १. ८)

प्रागभ्यासरहितस्य धातोर्लिटि परे द्विर्वचनं स्यात्। पच् पच् वस्,

## अत एकहल्मध्येऽनादेशादेर्लिटि (६. ४. १२०)

आदावभ्यासजस्त्वादिजरूपभेदरहितस्य धातोरसंयुक्तहल्मध्यगस्य अतः किति लिटि परे एत्वं स्यादभ्यासलोपश्च। पेच् वस्,

## वस्वेकाजाद्घसाम् (७. २. ६७)

द्विर्वचने कृतेऽप्येकाचां धातूनामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषाम्। पेचिवस्। पदकार्यं, पेचिवान्। क्वसोर्विकल्पोक्तिः

---

'हल्ङ्याबि'ति सोर्लोपो न भवति। लिटि धातोरनभ्यासस्य। 'एकाचो द्वे प्रथमस्य', 'अजादेर्द्वितीयस्ये'ति चाधिकृतार्थैकवाक्यतया यद्येकाजेव धातुस्तस्य अनेकाक्षु हलादेः प्रथमस्य अजादेर्द्वितीयस्यैकाचो द्वित्वमिति फलितोऽर्थः। अनभ्यासस्येति धातोर्विशेषणम्। पपाच, पपाठ, प्रोर्णुनावेत्यादीन्युदाहरणानि। लिटीति। कर्ता हर्तेत्यादौ लुडादिषु मा भूत्। अनभ्यासस्येति। नोनूयतेर्नोनावेत्यादौ पुनर्द्वित्वं मा भूत्। क्वसौ पच् वस् इति स्थिते स्थानिवद्भावेन द्वित्वम्। तदुदाहारि— पच् पच् वस् इति॥ अत एकहल्मध्येऽनादेशादेर्लिटि। 'घ्वसोरेद्धावि'त्यत एदित्यभ्यासलोप इति चानुवर्तेते। अत इति स्थानषष्ठी। 'गमहने'त्यतः क्ङितीति। सम्पिण्डितमाह— आदावभ्यासेत्यादिना। पेचतुः पेठतुरित्यादि। अत इति तपरकरणं बभाष इत्यादौ मा भूत्। 'चन्द्रोऽयमित्यार्ततरं ररासे' इति भगवान् पाणिनिः। ररक्षतुरित्यादावेत्ववारणायासंयुक्तहल्मध्यगस्येति। सूत्रे लिटीत्यादेशाविशेषणम्। सेहे नेमतुरित्यादौ प्रवृत्तिर्यथा स्यात्। अत्र हि 'धात्वादेः षः सः', 'णो नः' इति सनौ न लिण्निमित्तकौ। कितीति तु ननद बपठेत्यादौ वृद्धेरविषयेऽकिति मा भूदिति॥ वस्विति। अविभक्तिको निर्देशः। द्विर्वचने कृतेऽपीति। क्र्यादिनियमात् सर्वत्र प्राप्तावीटो नियमोऽयमित्याशयेन तद्विषयस्वरूपनिगमनपरमिदम्। एकाचः— आदिवान्, आशिवान्; आतां— जगिवान्, पपिवान्; घसे

पपाचेति तिङोऽपि सिद्ध्यर्था। आदन्तादृसोरिट्। पा इवस्। 'आतो लोप इटि च' (६-४-६४) इत्याल्लोपः। पिवस् पुनर्द्वित्वे,

## द्विर्वचनेऽचि (१. १. ५९)

द्विर्वचननिमित्तेऽचि कृतोऽजादेशो द्विर्वचनकाले स्थानिवत् स्यात्।

यणाल्लोपोपधालोपणिलोपेयङुवङ्गुणाः।
वृद्ध्ययाद्याश्चान्तरङ्गाः प्राग् द्वित्वात् स्युरतो वधः॥

तेन पा इत्यस्य द्विरुक्तिः। पा पा इवस्। द्विर्वचनकाल एव स्थानिवत्त्वात् पुनरप्याल्लोपः। पा पिवस्। अभ्यासह्रस्वः। पपिवान्। घसेस्तु घसिवस्। वसोः कित्त्वात् 'गमहन—' (६-४-९८) इत्युपधालोपः। प्राग्वत् स्थानिवत्त्वेन द्वित्वे पुनश्चोपधालोपः। घस् घ् स् इवस्।

---

जक्षिवानित्याद्युदाहरणम्। पदकार्यमिति। प्रथमैकवचने सौ कृते सम्पद्यमानमित्यादिः। आल्लोप इति। अन्तरङ्गत्वादित्यादिः॥ **द्विर्वचनेऽचि।** द्विरुच्यतेऽनेनेति द्विर्वचननिमित्तमनेन गृह्यत इति विवृणोति — **द्विर्वचननिमित्त** इति। **द्विर्वचनकाल** इति। द्विर्वचन इत्यावर्तत इत्याशयेनेदम्। **स्थानिवत् स्या**दिति। भावातिदेशपक्षमाश्रित्येदम्। सिद्धान्तकौमुदीकारास्तु 'न पदान्ते'त्यतो नञमनुवर्त्य प्रथमतोऽजादेशमेव न सम्मन्यन्ते। तथाहि तदीया वृत्तिः — 'द्वित्वनिमित्तेऽचि परेऽच आदेशो न स्याद् द्वित्वे कर्तव्ये' इति। कृते तु द्विर्वचने पुनरादेशा भवन्त्येव चक्रे इत्यादौ यणादयः। शेखरकारोऽपि स्थान्यचः पूर्वत्वेन दृष्टस्य कस्यचन कार्यस्याभावादचः परस्मिन्नित्यप्राप्ते वचनमिदमित्यभिप्रयन् भावातिदेशमेवाभिमन्यते। अनेन स्थानिवद्भावेन सम्पाद्यं फलं विविधकार्यमुखेन प्रदर्शयन् कारिकया सङ्गृह्णाति — **यणाल्लोपे**त्यादिना। यण् — चक्रे। आल्लोपः — पपतुः। उपधालोपः — जघ्नतुः। णिलोपः — आटिटत्। इयङ् — चिक्रियतुः। उवङ् — लुलुवतुः। गुणः निनय। वृद्धिः — निनाय। इत्यादि यथायथमूह्यम्। **पुनरप्याल्लोप** इति। गौरवमिदं प्रक्रियायाम्। दीक्षितचरणानां

---

१. 'स्या' क. ख. पाठः.

हलादिः शेषः (७. ४. ६०)

अभ्यासस्यादिरेव हल् शिष्यते अनादिर्हल् लुप्यते । घघृस् इवस्,

कुहोश्चुः (७. ४. ६२)

अभ्यासे कवर्गहकारयोश्चुः स्यात् । इति घस्य चुत्वं झः । 'अभ्यासे चर्च' (८-४-५४) इति जश्त्वम् । जघृस् इवस् । 'शासिवसिघसीनाञ्च' (८-३-६०) इति षत्वं, 'खरि च' (८-४-५५) इति घस्य चर्त्वम् । जक्षिवान् । दरिद्रादेस्तु —

एकाचो द्वे प्रथमस्य (६. १. १)

'लिटि धातोः' (६-१-८) इत्यादौ प्रथमस्यैकाचोऽवयस्य द्वे उच्चारणे स्त इत्यधिक्रियते । प्रथमैकाजिति द्वितीयैकाचः पूर्वो भाग उक्तः । तेन दर् इत्यस्य द्विरुक्तिः, दर् दरिद्रा वस्, 'हलादिः शेषः' (७-४-६०) इति रलोपः । ददरिद्रा वस् । ल्युटकवर्जित आर्धधातुके कर्तव्ये दरिद्रातेरालोपोक्तेरादन्तत्वनाशात् 'वस्वेकाज्—' (७-२-६७) इति इण् न । ददरिद्र्वान् । जागर्तेश्च, जागृ इत्यस्य द्विरुक्तिः, हलादि-

---

तु दिशा द्वित्वानन्तरमेवादेश इति लाघवम् ॥ अभ्यासस्येति । 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवर्तते । आदिरेवेति । 'सर्वं वाक्यं सावधारण'मिति न्यायात् । शिष्यत इति । शेष इति कर्मसाधनः । लुप्यत इति । अनादेर्लोपः परिशेषसिद्धः । सम्पूर्णमुदाहरणं — जग्लौ मम्लौ पपाचेत्यादि । अनादेः शेषऽनादेर्लोपश्च प्रकटः । आटेत्यादावनादेर्लोपः परम् । जिगायेत्यादावादेस्तदवस्थः शेषः परम् ॥ कुहोश्चुः । पूर्ववदभ्यासस्येत्यनुवर्तते । तदाह — अभ्यास इति । जश्त्वमिति । झशां जशः खयां चर इति तत्र विवेकादत्र झशो झस्य जश् जकारः ॥ पूर्वो भाग इति । एकः अच् यस्मिन्निति विग्रहे यदा गृह्यमाणः समुदायो द्वितीयमचं मर्यादीकृत्य प्रवर्तत इति भावः । ल्युडकवर्जित इति । दरिद्रातेरार्धधातुके लोप इति वार्तिकस्य षतया 'लुङि वा, सनि ण्वुलि ल्युटि च ने'ति वचनात् । तत्र लुङस्तिङ्विषयतया सनः कृत्वेनाप्रसिद्धेश्च ल्युडकवर्जित इति प्रकृते कथितम् । अत्रेयं भाष्यकारिका —

लोपः, अभ्यासह्रस्वः, जजागृवस् । 'जाग्रोऽविचिण्णल्ङित्सु' (७-३-८५) इति गुणः । जजागर्वान् । तत्र विशब्दे इकारस्योक्त्यर्थत्वाद् वकारादिप्रत्यये सर्वत्र जाग्रो गुणाभाव इति मते जजागृवानित्यपि ।

एवं क्विप्यपि वादित्वादगुणे ह्रस्वतस्तुकि ।
जागृत् स्यात् गुणपक्षे तु रेफान्तं जागरित्यपि ॥

विभाषा गमहनविदविशाम् (७. २. ६८)

एषां क्वसोरिड् वा स्यात् । गमेरभ्यासेचर्त्वं, जगम् वस् । अनिट्त्वे 'म्वोश्च' (८-२-६५) इति मस्य नत्वं जगन्वान् । इट्पक्षेऽजादित्वाद्

---

"न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥"

जाग्रोऽविचिण्णल्ङित्सु । 'मिदेर्गुण' इत्यतो गुण इत्यनुवर्तते । विचिण्णल्ङिद्भिन्ने परतो जागर्तेर्गुणः स्यादित्यर्थः । चिण्णल्ङित्पर्युदासादयं गुणः प्रतिषेधविषये वृद्धिविषये च विज्ञातव्यः । तस्मात् कृतेऽपि गुणे 'अत उपधाया' इति वृद्धिर्न भवति । जागरकः, जागरः, जजागरुः, जागरितः, जागरितवानित्यादीन्युदाहरणानि । विचिण्णल्ङित्स्विति किम् । जजागृविः । अजागारि । जजागार । जागृतः । अत्र गुणो मा भूत् । तस्मात् क्वसोर्वसि निषेधो न । तदुदाहरति — जजागर्वानिति । विशब्द इति । पर्युदासघटक इत्यादिः । उक्त्यर्थत्वादिति । उच्चारणार्थत्वादिति भावः । जजागृवानिति । 'जजागृवांसोऽनुग्मन्नि'ति भाष्योदाहरणम् । एवमिति । वकारादिप्रत्ययसामान्यस्य पर्युदास इत्यर्थः । इकारवत्यपि क्वौ घटकस्येकारस्यानुनासिकत्वादत्र च निरनुनासिकत्वादनेन पक्षान्तरे तस्य पर्युदसनीयता नास्तीत्याशयः । स्पष्टमिदं भाष्ये 'अनुनासिकपरश्च क्वौ विशब्दः' इति । इकारस्योच्चारणार्थत्वमङ्गीकृत्य विवरणं च न भाष्यासम्मतः पन्थाः । तत्राप्युच्यते — 'अथवा वकारस्यैवेदमशक्तिजेनेकारेण ग्रहणमि'ति । जागरिति । परत्वाद् गुणे कृते ह्रस्वाभावान्न तुक् ॥ म्वोश्चेति । 'मो नो धातोरि'ति समग्रमनुवर्तते । मकारवकारयोः परतो

---

१. 'अ' ग. पाठः. २. 'सस्य च' क. ख. पाठः.

'गमहन—' (६-४-९८) इत्युपधालोपः, जग्मिवान् । हनेरभ्यासस्य चुत्वं झः, जश्त्वं, जहन् 'अभ्यासाच्च',(७-३-५५) इति धातोः कुत्वं घः । जघन्वान् । इटि तूपधालोपः, जघ्निवान् । विदेर्लाभार्थस्य ग्रहः । द्वित्वे हलादिः शेषः । क्वसोः कित्त्वाद् धातोरगुणः । विविद्वान् विविदिवान् । विविश्वान् विविशिवान् । 'दृशेश्च क्वसाविड् वेति वाच्यम्' (वा० ७-२-६८) । द्वित्वं, हलादिः शेषः, ददृशिवस् ॥

उरत् (७. ४. ६६)

ऋवर्णान्तस्याभ्यासस्य रपरोऽत् स्यात् । दर्दृशिवस् । हलादिशेषः । ददृशिवान् ददृश्वान् । उक्तेभ्योऽन्येषां क्वसौ इण् न । भुवोऽभ्यासह्रस्वः । भुभूवस् ॥

भवतेरः (७. ४. ७३)

भुवोऽभ्यासस्य लिट्यत्वं स्यात् । जश्त्वं बभूवान् । कृञश्चकृवान् । भिदेर्बिभिद्वान् । दिव् वस्, वकारादौ किति प्रत्यये च्छ्वोः शूड् वेति कौमुदी । तत्र वस्य ऊठ्पक्षे यण । द्यूवस् । पुनर्द्वित्वं, द्यूद्यूवस् । हलादिशेषेण यलोपः । ह्रस्वः । दुद्यूवान् । ऊडभावे दिदिव् वस् । 'लोपो व्योः'(६-१-६६) इति वलोपः, दिदिवान् । एवं विच्छेः छस्य वा शत्वं, विविश्वान् विविच्छ्वान् ॥

---

मान्तस्य धातोर्नकारादेशो भवति । 'अलोऽन्त्यस्ये'ति मस्य नः । अजादित्वादिति । 'अचि श्नुधात्वि'त्यतस्तत्राचीत्यनुवर्तनात् । जग्मिवानिति । 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इति कालिदासः । अभ्यासाच्च । 'चजोः कुघिण्यतोरि'त्यतः कु इति 'हो हन्तेर्ञ्णिन्नेषु' इत्यतो हो हन्तेरिति चानुवर्तन्ते । अभ्यासात् परस्य हन्तेर्हकारस्य कवर्गादेश इत्यर्थः । जघान, जिघांसत्यादि । उपधालोप इति । अजादिप्रत्ययपरकत्वाज्जघ्न इत्यादाविव गमहनेत्यादिः । लाभार्थस्येति । विशिना तौदादिकेन साहचर्यादित्याशयः । ज्ञानार्थस्य विविद्वानित्येकमेव रूपम् । दृशेश्चेति । इदं च वार्तिकं 'विभाषा सृजिदृशोरि'त्यतो विभाषाग्रहणसम्बद्धं दृशिग्रहणं वस्वेकाजाद्घसामित्यनुवर्त्य स्थितं भाष्ये ॥ इण् नेति । 'वस्वेकाजाद्घसामि'त्यनेन नियमार्थेन निषेधादित्याशयः । भूमिदादीनां च क्सौ द्वित्वेऽनेकाच्त्वान्निषेधः ॥ पुनर्द्वित्व-

## दाश्वान् साह्वान् मीढ्वांश्च (६. १. १२)

एषां क्वसावद्वित्वं सहेः परस्मैपदं दीर्घादि च निपात्यते । 'दाशृ दाने' । दाश्वान् दत्तवान् । साह्वान् सोढवान् । मीढ्वान् मेहने कृतवानित्यर्थः ॥

## भाषायां सदवसश्रुवः (३. २. १०८)

एषां लोके भूतार्थमात्रे लिट् । तस्य च नित्यं क्वसुः स्यात् । सद्‌सद् वस् । पचिवद् 'अत एकहल्मध्ये —' (६-४-१२०) इत्येत्वाभ्यासलोपौ । 'वस्वे —' (७-२-६७) इतीट् च । सेदिवान् । वसेर्यजादित्वात् किति संप्रसारणम् । पूर्वरूपम् । उस् वस् । द्वित्वं, हलादिः शेषः । उ उस् वस् । सवर्णदीर्घः । ऊस् वस् । इदानीमेकाच्त्वादिट् । 'शासिवसि —' (८-३-६०) इति षः । ऊषिवान् । शुश्रुवान् । अच्त्वादिडभावः ॥

## उपेयिवाननाश्वाननूचानश्च (३. २. १०९)

---

मिति । निर्दिश्य विधानाद् द्वित्वात् प्रागूठ् प्रवर्तत इत्याशयः ॥ दीर्घादि चेति । आदिना अनिट्त्वं मिहेर्ढत्वं चोहनीये ॥ लोके इति । भाषायामित्यस्य विवरणमिदम् । भूतार्थमात्र इति । इदमनुमानसिद्धम् । अनद्यतने लङ् परोक्षे लिट् च विप्रतिषेधात् परत्वेन बाधकौ भवतः । परिशेषाद् भूतसामान्ये विभाषया लिट् लुङ् च प्रवर्तेते इति भावः । लिट् इति । वेति शेषः । अन्यथा लुङ्घटितप्रयोगस्यैवाभावापत्तेः । लुङश्चोदाहरणं भाष्ये — 'उपासदत् पाणिनिं कौत्सः' । नित्यं क्वसुरिति । स्पष्टमिदं वार्तिके 'तस्य क्वसुरपरोक्षे नित्यमि'ति । एवं चायं विवेकः फलितः — भूतसामान्ये क्वसुः लुङ् इति द्वौ, परोक्षभूते लिट्, अनद्यतने लङ् इति ।

"ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषाम् ।"

इति भट्टिः ।

"तत्तस्य शब्दमत्युग्रं शुश्रुवानुपसेदिवान् ।
उपेयिवांसं व्रतिनं चातुर्मास्यपरायणम् ॥"

उपसर्गोऽनियतः । ईयिवान् । समीयिवानित्यपि । अभुक्तवाननाश्वान् । साङ्गाध्ययनमनुवचनं, तत् कृतवाननूचानः । कानजन्तोऽयम् ॥

कौमुद्यां तु लिटः कानज् वेति लोकेऽपि कानचि ।
सञ्जग्मानश्च चक्राण इत्याद्यप्यस्ति तङ्वताम् ॥

इति भूतार्थाः ॥

---

इति सुभद्राहरणम् ॥ उपेयिवाननाश्वाननूचानश्च । एते शब्दा निपात्यन्ते । उपेयिवानित्यत्र उप इ इ वस् इति स्थिते सामर्थ्यादेकादेशं बाधित्वाभ्यासदीर्घे उत्तरखण्डस्य यणि कर्तव्ये क्र्यादिनियमात् प्राप्त इट् 'वस्वेकाजि'ति प्रतिषिद्धोऽनेन निपातनेन प्रतिप्रसूयते । उपेयिवानिति रूपे प्रतिप्रसवादुपेयुष इत्यादावजादौ न । उपसर्गोऽनियत इति । तथाच काशिका— 'नचात्रोपसर्गस्तन्त्रम्, अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येवे'ति ।

"उपेयुषः सिद्धिपथं मनस्विनः ।"

इति कालिदासः ।

"उपेयिवांसि कर्तारः पुरीमाजातशात्रवीम् ।"

इति माघः ।

'अनूचानः प्रवचने साङ्गेऽधीती'

इत्यमरः ।

"आहारसमयेऽनाश्वाननूचानं धनञ्जयः ।"

इति सुभद्राहरणम् । 'अनु अवोचद् अनूचान' इति भानुजिः । तङ्वतामिति । आनस्यात्मनेपदसंज्ञयात्मनेपदप्रत्ययभावितानामित्यर्थः । अथवा कारिकायां तङित्युपलक्षणमानस्यापि । ततोऽयमर्थः सिद्धः—आत्मनेपदयोग्यानामिति । सञ्जग्मान इति । अजादित्वादुपधालोपः । मकारोऽयं धातोः, न मुक् । सम्पूर्वाद् गच्छतेः 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' इत्यात्मनेपदम् ॥

इति भूतार्थाः ॥

## वर्तमाने लट् (३. २. १२३)

धातोर्वर्तमानेऽर्थे लट् स्यात् ॥

## लटः शतृशानचावप्रथमासमानाधिकरणे (३. २. १२४)

अप्रथमान्तेन सामानाधिकरण्ये लट एतौ स्तः । तङानावित्युक्तेरात्मनेपदिनामेव शानच्, परस्मैपदिनां शतृ । द्वयोः शः सार्वधातुकत्वार्थः । ऋकार उगित्त्वार्थः । चः स्वरार्थः । शब्गुणपररूपत्वेषु कृतेषु भवत् । उगित्त्वान्नुम् । भवन्तं हरिं वन्दे । एधेः शानच् । शप् । एध आन,

## आने मुक् (७. २. ८२)

आने परेऽङ्गस्यातो मुक् स्यात् । इति शबकारस्य मुक् । एधमानं हरिं वन्दे । प्रथमासमानाधिकरणे तु भवत्येधते वा हरिरित्येव, नतु भवन्निति स्यादिति मन्यते । तत्रापि विकल्पेन स्यादिति रामाद्याः । भवन्नेधमानो वा हरिरास्ते । "कामयानः सिद्धोऽनादिश्चेदि"ति वामनः । अनादित्वात् साधुश्चेदनित्यमागमशासनमिति मुगभावः साध्य इत्यर्थः । आस् आन । अदादित्वाच्छपो लुक् ॥

## ईदासः (७. २. ८३)

---

धातोरित्यधिकारादाह — धातोरिति । वर्तमान इत्यस्य वाच्यक्रियाद्वारा धातावन्वयः । एवं च वर्तमानकालक्रियायामित्यर्थः । आरब्धापरिसमाप्तत्वं वर्तमानत्वम् । तेन यावदध्ययनावसानं शिष्याः पठन्ति, नित्येषु च पर्वतास्तिष्ठन्तीत्यादयः प्रयोगाः सिद्धाः ॥ सार्वधातुकत्वार्थ इति । 'तिङ्शित् सार्वधातुक'मित्यादिः । उगित्त्वार्थ इति । उगित्त्वेन स्त्रियां ङीबर्थो नुमर्थश्चेति यावत् । वक्ष्यते चानुपदम् 'उगित्त्वान्नुमि'ति ॥ विकल्पेन स्यादिति । पुनर्लड्ग्रहणात् प्रथमासामानाधिकरण्येऽपीति केचित् — अस्ति ब्राह्मणः, सन् ब्राह्मण इति । 'विभाषाग्रहणमनुवर्तते । तच्च व्यवस्थितविभाषया यथादर्शनं प्रयोगान् नेतु'मिति चान्ये । उभयमिदं काशिकायां स्पष्टम् । तथा च कवयः — 'वसन् ददर्शावतरन्तमम्बराद्' माघः । 'क्षये जगज्जीवपिबं शिवं वदन्' श्रीहर्षः । वामनः काव्यालङ्कारसूत्रकारः । अनित्यमिति ।

---

१. 'च । ए' क. ख. पाठः,

आसेः परस्यानस्यादेरीत् स्यात् । आसीनः ॥

विदेः शतुर्वसुः (७. १. ३६)

वेत्तेः परस्य शतुर्वा वस्वादेशः स्यात् । विद्वस् । पदत्वे विद्वान् । शतृ विदन् । अस्यादादित्वात् शब्लुकि शतुर्ङित्त्वादगुणः । 'मृजेरजादावनेकालि क्ङिति वा वृद्धिर्वाच्या' । मार्जन् मृजन् । तुन्दपरिमृजे त्वेकाच्त्वान्न । 'माङ्याक्रोशे लटः शतृशानचौ वाच्यौ' (वा० ३·२·१२४)। स च शापः, कुत्सा वा । खलोऽयं मा जीवन् । मा जीवत्विति तिङन्तवत् समाप्तिरित्येके । मा जीवन्नेष तिष्ठतीति कुत्सितं जीवन्नित्यन्ये । एवं मा पचमानः ॥

सम्बोधने च (३. २. १२५)

शतृशानचौ स्तः । हे पचन्! हे पचमान! ॥

लक्षणहेत्वोः क्रियायाः (३. २. १२६)

---

इदं च नि लोडित्येव सिद्धे आनिग्रहणात् सिद्धम् । तेन 'सागरं तर्तुकामस्ये'-त्यादि सिद्धमित्युपाध्यायचरणाः ॥ आदेरीदिति । 'आदेः परस्ये'ति सिद्धस्य विवरणमिदम् ।

"उदासीनवदासीनो गुणैर्यो न विचाल्यते ।"

इति गीता ॥ विद्वानिति । 'उगिदचामि'ति नुमि उपधादीर्घे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाभावे च सिद्धमिदं रूपम् । विदन्निति । वस्वादेशस्य पाक्षिकत्वात् । ङित्त्वादिति । 'सार्वधातुकमपिदि'त्यादिः । अगुणः । 'क्ङिति चे'त्यादिः । अनेकालि क्ङितीति । अजादिपदस्वारस्यलब्धमिदमनेकालिति । 'क्ङित्यजादौ वेष्यत' इति वार्तिकम् । 'इहान्ये वैयाकरणा मृजेरजादौ सङ्क्रमे विभाषा वृद्धिमारभन्ते' इति 'इको गुणवृद्धी' इति सूत्रे भाष्यकारः । नेति । परिमृजशब्दे वृद्धिर्नेत्यर्थः । शापविषयत्वद्योतनार्थं खलोऽयमिति । मा जीवत्विति । शापविषयत्वाल्लटोऽप्यर्थे भवन् शता विध्यर्थपर्यवसायीति भावः ।

"मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥"

इति माघः । इह प्रकृतवाक्यार्थेनाक्रोशः स्पष्टः ॥ सम्बोधने चेति । प्रथमा-सामानाधिकरण्यादप्राप्तौ वचनमिदम् ॥ लक्षणहेत्वोरिति । लक्षणहेतू क्रिया-

---

१. 'चसा' क. ख. पाठः.

क्रियान्तरस्य लक्षणभूते हेतुभूते वा धात्वर्थे एतौ स्तः । स्मयमानो विवक्षति । अत्र स्मयनं विवक्षाक्रियायाश्चिह्नम् । कारणं प्रयोजनं चात्र हेतुः । तृष्यन् पिबति । अर्जयन् वसति । तर्षाद्धेतोरर्जनार्थं चेत्यर्थः ॥

तौ सत् (३. २. १२७)

शतृशानचौ सत्संज्ञौ ॥

लृटः सद् वा (३. ३. १४)

भविष्यदर्थे लृट् वक्ष्यते, तस्य वा सदादेशः स्यात् । भू अत् ॥

स्यतासी लृलुटोः (३. १. ३३)

लृलुटोः परयोः क्रमात् स्य तासि इति प्रत्ययौ स्तः । स्थानिवत्त्वेन शतुर्लृट्त्वात् स्यः । भू स्य अत् । स्यस्य वलादित्वाद् इट् । गुणः । पररूपम् । प्रत्ययसस्य षः । भविष्यन् । आने मुक् । एधिष्यमाणः । प्राग्वल्लक्षणहेत्वोश्चोह्यौ । वेत्युक्तिः लृटस्तिङ्सिद्ध्यर्था ॥

पूङ्यजोः शानन् (३. २. १२८)

आभ्यां वर्तमानेऽर्थे शानन्प्रत्ययः स्यात् । नित्त्वात् स्वरे भेदः । शब्गुणौ मुक् च । पवमानः यजमानः ॥

---

विषयौ बोध्यौ । लक्षणं चिह्नं, तदाह — चिंह्नमिति । 'शयाना भुञ्जते यवना' इत्याद्युदाहरणम् । हेतुरिति । फलमपीह हेतुरित्यभियुक्ताः ॥ स्यतासी लृलुटोः । लृ इति लृट्लृङोरनुबन्धविनिर्मुक्तयोः सामान्येन ग्रहणम् । तस्मिन्, लुटि चेत्यर्थाद् यथासङ्ख्यमिति लृट्लृङोः स्यः, लुटि तासिश्च फलति । 'तासेरिदित्त्वं मन्तेत्यादावनिदितामिति लोपबाधनार्थमि'ति काशिका । लक्षणहेत्वोश्चेति । हेतौ यथा मदीये चित्रोदयमणौ —

"इति विविधमहार्हश्रीविलासेन वञ्चि-
क्षितिमिह विजयश्रीमालिनीं लालयिष्यन् ।
मतिधृतिमहितश्रीपार्वतीकाल्यमान-
श्चिरमवतु धरित्रीमेष चित्रावतारः ॥"

लालयिष्यन्नित्यस्य लालनहेतोरिति तात्पर्यम् ॥ स्वरे भेद इति । उभयपदि-

ताच्छील्यवयोवचनशक्तिषु चानश् (३. २. १२९)

एषु द्योत्येषु सर्वधातोश्चानश् स्यात्। तेन परस्मैपदिभ्योऽपि—

सहैव चरमाणौ द्वौ वहमानौ मितं धनुः।
जयमानौ च रक्षांसि राघवौ मुनिमन्वितौ ॥

इङ्धार्योः शत्रकृच्छ्रिणि (३. २. १३०)

अनयोरकृच्छ्रवति कर्तरि शतृ स्यात्। इङोऽदादित्वाच्छब्लुकि शतुर्ङित्त्वादगुणे इयङ्। इयन्। इङो नित्यमधिपूर्वत्वादधीयन्। कृच्छ्रेण चेद्, अधीयानः। धारेर्ण्यन्तस्य शब्गुणायादेशाः। धारयन् ॥

द्विषोऽमित्रे (३. २. १३१)

शत्रौ वाच्ये द्विषः शतृ स्यात्। द्विषन्। अदादित्वाद् विदिवदगुणः। अशत्रौ तु द्वेष्टि पतिं भार्येति तिङेव ॥

---

त्वादनयोर्यजेः पूङश्च स्वयमेवात्मनेपदलकारे शानचा सिद्धे रूपे शाननः पृथग्वचनस्य फलमिदम्। अलादेशत्वेऽपि शाननन्तस्य 'न लोके'ति षष्ठीप्रतिषेधस्तृन्निति नकारपर्यन्तं प्रत्याहाराङ्गीकरणात् सिद्धः। तेन सोमं पवमान इत्यादि निर्बाधम्॥ ताच्छील्येति। इदं सामान्यतो वचनात् परस्मैपदिभ्य आत्मनेपदिभ्योऽपिताच्छील्यादिषु विधानाय नियमाय चोपयोक्ष्यते। तेन चरादिषु चरमाणादिरूपमपूर्वं सिध्यति। पचादिषु पचमानादिनियमश्च फलति ताच्छील्यादिष्वर्थेषु। तथाचोदाहरणं कारिकायां — चरमाणौ वहमानाविति। इदं ताच्छील्य उदाहरणम्। वयोवचने — कतीह कवचं पर्यस्यमानाः। शक्तौ — कतीह क्लिश्यमाना इत्याद्युदाहरणानि॥ अकृच्छ्रवतीति। न कृच्छ्रमकृच्छ्रं, तदस्येति मतुपि रूपमिदम्। इङ्धार्योरित्यत्रेङ आत्मनेपदित्वादप्राप्तविधये धारेरुभयपदित्वेऽपि नियमार्थं चार्थविशेषे वचनम्। उदाहरणानि कारिकया —

"सान्दीपनेरधीयन् यो धारयंश्चाखिलाः कलाः।
अबोधयत् कुचेलादीन् स विद्यामाधवोऽवतात् ॥"

द्विषोऽमित्र इति। उभयपदित्वेऽप्यर्थविशेषे तिङो नियमार्थं वचनम्। तदुच्यते — द्वेष्टि पतिं भार्येति। तिङेवेति। शत्रन्तस्योदाहरणं माघे यथा —

## सुञो यज्ञसंयोगे (३. २. १३२)

सुञोऽस्मिन् द्योत्ये शतृ स्यात् । 'स्वादिभ्यः श्नुः' (३-१-७३) इति शब्विषये श्नुः । श्नोरपि शित्त्वेन ङित्त्वाद् धातोरगुणः । सुनु अत् । शतुर्ङित्त्वेन श्नोर्गुणाभावात् 'आचि श्नु—' (६-४-७७) इत्युवङि प्राप्ते ॥

## हुश्नुवोः सार्वधातुके (६. ४. ८७)

हुश्नुवोरनेकाचोरसंयोगपूर्वस्योवर्णस्याजादौ सार्वधातुके परे यण् स्यात् । सुन्वन् यजमानः । यज्ञसंयोगाभावे सुनोत्यौषधमित्येव । संयोगोक्तेर्ऋत्विक्त्वेऽपि न । अध्वर्युः सुनोति ॥

## अर्हः प्रशंसायाम् (३. २. १३३)

शतृ स्यात् । पूजामर्हन् द्विजः । अप्रशस्ते तु वधमर्हति चोरः ॥

## आ केस्तच्छीलतद्धर्मतत्साधुकारिषु (३. २. १३४)

इतः परं क्विप्पर्यन्ताः प्रत्यया एष्वर्थेषु स्युः ॥

## तृन् (३. २. १३५)

एष्वर्थेषु सर्वधातोस्तृन् स्यात् ।

तच्छीले रक्षिता कृष्णस्तद्धर्मण्यविता नृपः ।
वसिता वस्त्रमित्येवं साधुकारिणि कर्तरि ॥

---

"यियक्षमाणेनाहूतः पार्थेनाथ द्विषन् मुरम् ।
अभिचैद्यं प्रतिष्ठासुरासीत् कार्यद्वयाकुलः ॥"

'द्विषः शतुर्वे'ति विकल्पेन षष्ठीप्रतिषेधादिह मुरं द्विषन्निति ॥ सुञ इति । सर्वे सुन्वन्त इति काशिका । साक्षाद् यज्ञसम्बन्धे यजमानानां वाचकमिदम् । तेन याजकेषु तिङेव । सफलं च संयोगग्रहणमस्येवमित्यपि काशिका । तदाह—संयोगोक्तेर्ऋत्विक्त्वेऽपि नेति ॥ अर्हः प्रशंसायाम् ।

"अर्हतामग्रणीः कृष्णो मान्योऽन्यो वधमर्हति ।"

इति भक्तः । अर्हार्थे शतैवान्यत्र तिङेवेति नियमः फलितः ॥ क्विप्पर्यन्ता इति । आ केरित्यत्राङ् अभिविधावित्याशयः । तच्छब्देन धात्वर्थः परामृश्यते ।

---

१. 'श्नोः शि' ग. पाठः.

अत्र तृन्युक्ता होतृपोत्रादयः उणादौ वक्ष्यन्ते ॥

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतु-वृधुसहचर इष्णुच् (३. २. १३६)

अलंकृञादिभ्यस्तच्छीलादाविष्णुच् स्यात् । गुणः । अलङ्करिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उत्पदेति माधवपाठात् उत्पत्तिशील उत्पादिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः । 'णेश्छन्दसि' (३-२ १३७) इति ण्यन्तादिष्णुच् लोकेऽप्यस्तीति कौमुदी । कारि इष्णु । णिलोपे प्राप्ते,

अयामन्ताल्वाय्येत्न्विष्णुषु (६. ४. ५५)

आम् अन्त इत्यादिषु परेषु णेरयादेशः स्यात् । कारयिष्णुः । धारयिष्णुः । 'भुवश्च' (३-२-१३८) इतीष्णुजपि लोके माधवोक्तः । भविष्णुः प्रभविष्णुः । चकारादन्येभ्यश्च । भ्राजिष्णुः क्षयिष्णुः । आतपसेविष्णुः ग्रसिष्णुश्च माधवोक्तः ॥

ग्लाजिस्थश्च क्स्नुः (३. २. १३९)

---

तत्क्रियाशीलः तत्क्रियाधर्मः तत्क्रियासाधुकारीत्यर्थः । शीलं स्वभावः, धर्म आचारः, साधुकारिता यथावत् प्रवर्तनमिति तेषामर्थः ॥ तृन् स्यादिति । नकारः स्वरार्थः । रक्षिता कृष्ण इति । रक्षणस्वभाववान् कृष्ण इति भावः । एवमन्यत्रापि — अवनधर्मा नृपः, साधुवसनक्रियाकर्ता देवदत्त इत्यादि बोध्यम् । तृन्युक्ता इति । 'तृन्विधावृत्विक्षु चानुपसर्गस्ये'ति वचनेन सिद्धाः इति शेषः ॥ अलङ्कृञित्यादि । प्रसिद्ध्या करोतेरेव ग्रहणं, न हिंसार्थस्य । कौमुदीति । प्रक्रियाकौमुदी ॥ अयादेश इति । णेरलोपे पर्यवसानम् । भुवश्च । योगविभाग उत्तरार्थः । तत्फलं तूत्तरत्र वक्ष्यते । लोक इति । छन्दसीत्यननुवृत्तेः । 'जगत्प्रभोरप्रभविष्णु वैष्णवम्', 'विष्णवे प्रभविष्णवे' इत्यादयः कविप्रयोगा द्रष्टव्याः । भुवश्चेति चकारमनुक्तसमुच्चयार्थमभ्युपेत्य 'भ्राजिष्णुना लोहितचन्दनेने'ति प्रयोगः काशिकायां साधितः । भाष्ये तु नेदमाश्रीयते ॥ ग्लाजिस्थश्च क्स्नुः । छन्दसीति निवृत्तमिति मनसि कृत्याह—

एभ्यो भुवश्च क्स्नुः स्यात्। ग्लास्नुः जिष्णुः स्थास्नुः। अत्र 'घुमास्था—'(६-४-६६) इतीत्वे प्राप्ते स्थ इत्यत्राकारप्रश्लेषात् आदन्तस्यैव स्थाधातोः क्स्नुः। भुवस्तु भूष्णुः। 'श्र्युकः किति' (७-२-११) इति इडभावः॥

## त्रसिगृधिधृषिक्षिपेः क्नुः (३. २. १४०)

क्नित्त्वादगुणः। 'नेड्वशि—'(७-२-८) इत्यनिट्त्वम्। त्रस्नुः गृध्नुः धृष्णुः क्षिप्नुः। 'म्लाक्षिपचिपरिमृजिभ्यः स्नुरि'ति भोजः। म्लास्नुः। अकित्त्वाद् गुणः, षत्वं, क्षेष्णुः। कुत्वं, पक्ष्णुः। मृजेर्वृद्धिः, व्रश्चादिषत्वं षढोः कः सि। परिमार्क्ष्णुः॥

## शमित्यष्टाभ्यो घिनुण् (३. २. १४१)

शमादिभ्योऽष्टभ्यो धातुभ्यो घिनुण् स्यात्। घः कुत्वार्थः। उकारः उगित्त्वार्थः। णो वृद्ध्यर्थः॥

मान्ते 'नोदात्तोपदेशे'त्यवृद्धित्वं शमी तमी।
दमी क्षमी श्रमी वृद्धौ मादी चापि भ्रमी क्लमी॥

---

एभ्यो भुवश्च क्स्नुः स्यादिति। स्थाधातोः क्स्नोः कित्त्वमाश्रित्येत्वं प्रसजद् वारयितुं भाष्ये वृत्त्यादौ च गित्त्वमेवाश्रितम्। तथा जिष्ण्वादौ गुणं भूष्ण्वादाविटं च प्रतिबन्धुं 'क्ङिति च', 'श्र्युकः किती'त्यनयोर्गकारप्रश्लेषोऽप्याद्दतः। अयमन्यो लघिष्ठः पन्थाः—यत् स्थाधातावेव प्रकृतसूत्रे आकारप्रश्लेषादाकारान्तस्यैव क्स्नुः नतु सम्भविष्यद्धिकारेणेकारान्ततां प्रतिपद्यमानस्येत्याशयेनाह — आकारप्रश्लेषादिति॥ भोज इति। ग्लास्थाधात्वोः प्रकृते पाणिनिवचनेनैव सिद्धत्वात् परिशेषवचनमिदं ग्लाक्षीत्यादि। वस्तुतो भोजसूत्रं तु 'ग्लाम्लास्थाक्षिपचिपरिमृजिभ्यः स्नुरि'त्येव। परिसहचरणात् केवलस्य मार्ष्टेर्नेदम्॥ नोदात्तोपदेशेति। 'नोदात्तोपदेशस्य मान्तस्यानाचमेरि'ति सम्पूर्णं सूत्रम्। अनेनोपधावृद्धिः प्रतिषिध्यते। तदाह — अवृद्धित्वमिति। 'शमिनां हि परपरिग्रहपराङ्मुखी दृष्टिः।' इति कालिदासः। 'कामं क्षाम्यतु यः क्षमी' इति माघः॥ घिनुणि प्रक्रियाकार्यं कारिकया

1. 'वः क्स्नुः', २. 'त्याका' ग. पाठः.

**सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसञ्ज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च (३. २. १४२)**

एभ्यस्तच्छीलादौ घिनुण् स्यात् ।

एषु कुत्वं चजान्तानां गुणस्त्विगुपधे भवेत् ।
अजन्ते चाप्यदुपधे वृद्धिः स्यादिति योज्यताम् ॥

सम्पर्की । अनुरोधी । आङ्पूर्वौ यामियसी । आयामी । आयासी । 'देवृ देवने' परिदेवी । रञ्जेर्निपातनान्नलोपः, रागी । अभ्याघाती ।

संव्यनुप्रेषु वदतेः प्रयसेः संवसेर्भुजेः ।
समभ्योश्चर इत्यादि बहुभ्यः प्राह भोजराट् ॥

**वौ कषलसकत्थस्रम्भः (३. २. १४३)**

विकाषी हन्ता । विलासी । विकत्थी । विस्रम्भी । 'वौ कसे'ति पाठाद् विकासीति टीकासर्वस्वे ॥

**अपे च लषः (३. २. १४४)**

लषेरपे वौ च घिनुण् । अपलाषी । विलाषी ॥

---

सङ्गृह्णाति — एषु कुत्वमित्यादिना । कुत्वं 'चजोः कु घिण्यतोः' इति घित्त्वात् । वृद्धिर्णित्त्वनिबन्धना । सम्पर्की । अर्थे रूपे वा भेदाभावाद् रुधादिकस्यादादिकस्य च सामान्यतो ग्रहणम् । काशिकायां तु रुधादिरेवाऽविकरणतया गृह्यत इत्युक्तम् । परिदेवीति । 'देवृ देवने' इति भ्वादेरेव ग्रहणं, न तु दिवेः । तत्र देवीति निर्दिष्टत्वासम्भवात् । 'संव्यनुप्रेषु वदः', 'सम्प्रयोर्वसः', 'समत्यपाभिव्यभिषु चरः' इत्यादिभिरनेकैः सूत्रैरुपपादितोऽर्थः भोजराजेन सरस्वतीकण्ठाभरणे निगमित इति कारिकया सङ्गृह्णाति — संव्यनुप्रेष्विति ॥ विकासीति । सूत्रे कषेः प्राक् कसिमपि पठितं मन्यते सर्वस्वकारः । भोजश्च मुक्तकण्ठमेवं सूत्रयति — "वौ विचकत्थस्रन्भुकषकसलघाहनिभ्यः" इति । तन्मते विवेकी विकासी विघातीति स्वरसतः सिध्यति ।

"अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्त्रयम् ।"

प्रे लपसुद्रुमथवदवसः (३. २. १४५)

प्रलापी प्रस्रावीत्यादि । 'प्रे लपस्रु' इति माधवोक्तपाठे प्रसारी ॥

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्या-भाषासूयो वुञ् (३. २. १४६)

वोरकः । निन्दकः हिंसकः इत्यादि । ण्वुला सिद्धेऽप्युक्तिस्तच्छीलादौ ण्वुल्तृजादेरभावात् । अनेकाज्भ्यश्च वुञ् भोजोक्तः । दरिद्रायकः जागरकः । 'जाग्रोऽवि—' (७-३-८५)इति गुणः ।

देविक्रुशोश्चोपसर्गे (३. २. १४७)

प्रदेवयितुं शीलमस्येति प्रदेवकः । आक्रोशकः ॥

चलनशब्दार्थादकर्मकाद् युच् (३. २. १४८)

चलनशीलश्चलनः । कम्पनः । शब्दनः । रणनः । सकर्मकात् तु पठिता विद्याम् । हारावलीलोलनः भुवनक्षोभण इत्यादौ तु णिचि सकर्मकत्वात् 'कृत्यल्युटो बहुलम् (३-३-११३) इति कर्तरि ल्युडेव ॥

---

इत्याभाणकीयाः । "विकासिवक्त्राब्जविकाशिताशाः" इति देवीमाहात्म्यम् ॥ स्रिवति । केचिदत्र स्रृ इति ऋकारान्तपाठमभ्युपयन्ति । तन्मते प्रसारी सिद्धः । तदाह — माधवोक्तेति । वस इत्यलुग्विकरणस्य निवासार्थस्य ग्रहणं, न लुग्विकरणस्याच्छादनार्थस्य । तेन प्रवासीति देशान्तरनिवासिनि ॥ अभावादिति । अनेनैव वुञ्विधानेन ताच्छीलिकेषु वासरूपन्यायेन तृजादयो न भवन्तीति वृत्तिकारः । ज्ञापकसिद्धस्यासार्वत्रिकत्वात्

"कामक्रोधौ मनुष्याणां खादितारौ वृकाविव ।"

इत्यादयः सिध्यन्ति । भोजोक्त इति । इत्थं च तदीयं सूत्रं — 'निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकाज्भ्यो वुञ् । (अध्या० १. पा० १. सू० २१७) इति ॥ चलन इति । स्त्रियां चलनेत्यादिरूपं टापा । पठिता विद्याम् । शब्दार्थत्वात् पठेः । ल्युडेवेति । ततः स्त्रियां लोलनी क्षोभणीति

---

१. 'स्रा' ग. पाठः.

## अनुदात्तेतश्च हलादेः (३. २. १४९)

अकर्मकादेव । स्पर्धनः ।

अजादेस्त्वेधितेत्येव बाधितेति सकर्मकात् ।
तथानुदात्तेद्भ्योऽन्यत्र सेद्धेति प्रत्युदाहृतिः ॥

## जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः (३. २. १५०)

एभ्योऽपि युच् । जुः सौत्रो वेगार्थः । जवनः । चङ्क्रम्य अन,

## यस्य हलः (६. ४. ४९)

हलः परस्य यशब्दस्यार्धधातुके परे आदिलोपः स्यात् । चङ्क्रम् अ अन । पुनरतो लोपः । चङ्क्रमणः । एवं दन्द्रमणः । गत्यर्थात् कुटिलगत्यर्थे यङन्तावेतौ । सरणः, गर्धन इत्यादि ॥

## क्रुधमण्डार्थेभ्यश्च (३. २. १५१)

क्रोधार्थेभ्यो भूषणार्थेभ्यश्च युच् । क्रोधनः । कोपनः । मण्डनः । भूषणः ॥

## न यः (३. २. १५२)

यान्ताद्धातोरनुदात्तेत्त्वात् प्राप्तो युज् न । आप्यायिता । स्फायिता ॥

## सूददीपदीक्षश्च (३. २. १५३)

युज् न । सूदिता । दीपिता । दीक्षिता । मधुसूदनस्तु नन्द्यादिः ॥

## लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् (३. २. १५४)

अभिलाषुकः । पातुकः । प्रतिपादुको ज्ञाता । स्थायुकः । भावुकः । वर्षुकः । घातुकः । कामुकः । गामुकः । शारुको हन्ता ॥

---

ङीबन्तरूपं बोध्यम् । 'क्षोभणश्चर्षणीनामि'ति वैदिकविधौ प्रयोगः ॥ हलादेरिति । आदिग्रहणादनेकाचोऽपि गृह्यन्त इति पक्षे जुगुप्सनः मीमांसन इत्यादि चोदाहरणम् ॥ आदिलोप इति । आदेः परस्येत्यादिः ॥ नन्द्यादिरिति । भोजस्तु ण्यन्तात् कर्तरि ल्युः नन्द्यादिषु वा द्रक्ष्यत इत्याह ॥ ज्ञातेति । प्रतिपद्यत इति प्रतिपादुकः इति कर्तरि व्युत्पत्तिरिति भावः ।

---

१. 'षार्थे' क. पाठः.

**जल्पभिक्षकुट्टलुण्टवृङः षाकन् (३. २. १५५)**

जल्पाकः । भिक्षाकः । कुट्टाकः छेत्ता । लुण्टाकः स्तेयशीलः । वराको याचिता । षित्वात् ङीष् जल्पाकीत्यादि ॥

**प्रजोरिनिः (३. २. १५६)**

प्रपूर्वाज्जुधातोरिनिः । प्रजवी ॥

**जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च (३. २. १५७)**

इनिः स्यात् । जयी । आदरी । क्षयी । विश्रयी । इण्, अन्वयी । वमी । अव्यथी । अभ्यमी अभिगन्ता द्रोग्धा वा । परिभवी । 'षू प्रेरणे', प्रसवी ॥

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् (३. २. १५८)**

आद्यास्त्रयः स्वार्थण्यन्ताः । 'अयामन्त—'(६-४-५५)इत्ययादेशः । स्पृहयालुः । गृहयालुः । पतयालुरित्यादि । 'शीङश्च वाच्यम्' वा० ३-२-१५८) शयालुः ॥

---

"उत्पादुकक्षुत्तृडार्तान् पान्थानापादुकान् गृहम् ।
सन्तर्प्य विप्रान् भर्तृश्च भवान्नाद्यभिलाषुका ॥
प्रभावुकेन भक्तेन भवोपस्थायुका द्विजान् ।
श्रिताद्धते प्रदातॄणां वर्षुकाः सर्वसम्पदः ॥"

इति सुभद्राहरणम् ॥ स्तेयशील इति । 'त्रिभुवनकुटीलुण्टाकानामि'ति मुरारिः । ङीषिति । 'एषापि स्वगुणानुरूपरमणाभावाद् वराकी हते'त्याभाणकीयाः । जल्पाकीति । 'जल्पाकीभिः सहासीन' इति भट्टिः । उकञन्ते ङीषभावात् 'कामुका एनं स्त्रियो भवन्ती'ति टाबन्तमेव वृत्तावुदाहरणम् ॥ जिदृक्षीत्यादि ।

"जयी विषयिणां नित्यमव्यथी तेजसो वमी ।
आदरी मुनिमुख्यानां परिभव्यसतां भव ॥"

इति सुभद्राहरणम् ॥ स्वार्थण्यन्ता इति । 'स्पृह ईप्सायाम्, 'गृह ग्रहणे', 'पत गतौ' इति कथाद्यन्तर्गता अदन्ताश्च । अतो नोपधावृद्धिः । अत उदाहरति — स्पृहयालुरित्यादि । शीङश्च वाच्यमिति । भोजस्तु '.... शीङ्श्रद्धाभ्य आलुजि'ति सूत्र एव शीङमपाठीत् ।

## दाधेट्सिशदसदो रुः (३. २. १५९)

दानशीलो दारुः । धेटः आत्वं धारुः । बन्धनशीलः सेरुः । शदिरुक्तार्थः । शद्रुः शरो धटो वा । सद्रुः ॥

## सृघस्यदः क्मरच् (३. २. १६०)

कित्त्वादगुणः । सृमरः । घस्मरः । अद्मरः ॥

## भञ्जभासमिदो घुरच् (३. २. १६१)

भञ्जेः कर्मकर्तर्येव । घित्वाज्जस्य कुः । स्वयं भञ्जनशीलो भङ्गुरः । भासुरः । मेदुरः ॥

## विदिभिदिच्छिदेः कुरच् (३. २. १६२)

कित्त्वादगुणः । ज्ञानशीलो विदुरः । भिदुरः । छिदुरः । द्वौ

"धनेभ्यः स्पृहयालुभ्यस्तीर्थेष्वर्थचयं त्यज ।
दयालुर्गृहयालुभ्यः पतयालुभ्य ईप्सितम् ॥
अनिद्रालुरतन्द्रालुरशयालुः सदा भव ।
श्रद्धालुरीहमानो वा सर्वानर्थान् प्रपद्यते ॥"

इति सुभद्राहरणम् ॥ धारुः । पानशीलः । 'धारुर्वत्सो मातरमि'ति काशिका । बन्धनशील इति । 'षिञ् बन्धने' इति श्नुविकरणस्येदं रूपम् । सिनोतीति सेरुरिति व्युत्पत्तिः । गुणेन सेरुः ।

"सद्रुचितास्तमैक्षन्त गात्रैः शोकेन शत्रुभिः ।
.. सेरुं मनोगुणैः पौरा दारुमर्थानभीप्सितान् ॥"

इति सुभद्राहरणम् ॥ घस्मर इति । 'शत्रुसङ्घातघस्मर' इति मदीये चित्रोदयमणौ । 'भक्षको घस्मरोऽद्मर' इत्यमरः ।

'चकार धूसरं व्योम सृमरं सरणौ जनः ।'

इति सुभद्राहरणम् ॥ कर्मकर्तर्येवेति । 'भञ्जेः कर्मकर्तरी'ति भोजसूत्रम् । भासमिदोरकर्मकत्वात् तत्तुल्ययोगक्षेमतया प्रयोगस्वाभाव्याच्चेदं विवरणम् । भज्यते स्वयमेवेति भङ्गुरं काष्ठम् ।

"लघूकरिष्यन्नतिभारभङ्गुरामम्ं किल त्वं त्रिदिवादवातरः ।"

इति माघः ॥ ज्ञानशील इति । विदुरे कौरवे योगरूढोऽयमिति भावः । छिदुर इति ।

कर्मकर्तरीति वृत्तिः । कर्तर्यपीति हरमाधवौ । व्यथेः सम्प्रसारणं चेति माधवः । व्यथाशीलो विथुरः । विधुरस्तूणादेः स्यात् ॥

इण्नशिजिसर्तिभ्यः क्वरप् (३. २. १६३)

पित्त्वात् तुक् । उदित्वरः । नश्वरः । जित्वरः । सृत्वरः ॥

गत्वरश्च (३. २. १६४)

गमेः क्वरबयम् ॥

जागुरूकः (३. २. १६५)

जागृधातोः ऊकः स्यात् । गुणः । जागरूकः ॥

---

"प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गनाः ।"

इति माघः । वृत्तिरिति । 'भञ्जेः कर्मकर्तरि', 'छिदिभिदिभ्यां कुरच्' इति भोजवचनम् । कर्तर्यपीति वदतोर्हरमाधवयोः— 'दोषान्धकारभिदुरः', 'दसारिवक्षश्छिदुरः' इत्यादयः प्रयोगाः स्वारस्येनैव सिध्यन्ति । अन्येषां तु बहुव्रीहिः शरणीकरणीय इत्यलम् । उणादेः स्यादिति । 'व्यथेः सम्प्रसारणं कुरश्च वक्तव्य' इति वचनात् सिद्धिं वृत्तिकार आह ॥ जित्वरः सृत्वर इति 'नेड् वशी'तीण्निषेधः । स्त्रियां क्वरबन्ततया ङीपि जित्वरीत्यादि रूपम् ।

"मेदुरोरसिजाभोगभङ्गुरोदरवल्लिकाः ।
स भावविदुरोपास्यद्वारनारीरभीत्वरीः ॥
सृत्वरेषु नखस्पर्शभिदुरस्तनमण्डलाः ।
हीनश्वरीः सुरस्त्रीणां जित्वरी रूपसम्पदा ॥"

इति सुभद्राहरणम् ॥ गत्वरश्चेति । अनुनासिकलोपः क्वरप्प्रत्ययश्च सह निपात्येते । भोजस्तु 'गमेस्त चे'ति तकारमन्तादेशं विधायानुनासिकलोपफलमानयति । जागृधातोरिति । व्युत्पन्नानामिदं जागुरूक इति रूपं न तु निपातनमित्याशयः । अन्यथोत्तरसूत्र ऊकस्याननुवृत्तिप्रसङ्गः । बहुलाधिकाराज्जागरितापरत्रादिति भोजः ।

"जागरूको भवास्मासु त्वं गत्वरमतिस्त्विति ।
नम्रस्मेरं तमित्युक्त्वा पौरो निववृते जनः ॥"

## यजजपदशां यङः (३. २. १६६)

यङन्तानामेषामूकः स्यात् । जपदशोः कुत्सने यङ् । यायज्य जञ्जप्य, दन्दश्य इति स्थिते 'यस्य हलः' (६-४-४९) इति यलोपः। अतो लोपः । यायजूकः । जञ्जपूकः । दन्दशूकः सर्पः । हिंस्रमात्रेऽप्याह भट्टिः । वदेश्च भोजः । वावदूकः ॥

## नमिकम्पिस्म्यजसकमहिंसदीपो रः (३. २. १६७)

नम्रः । कम्प्रः । स्मेरः । 'जसु मोक्षणे' । न मुञ्चति कालमित्यजस्रो नित्यः । कम्रः कामुकः । कर्मण्यपि दण्डनाथः । कम्रं मुखम् । हिंस्रः, दीप्रः ॥

## सनाशंसभिक्ष उः (३. २. १६८)

सन्नन्तादाशंसिभिक्षिभ्यामप्युः स्यात् । बुभूष उ । अतो लोपः । बुभूषुः । चिकीर्षुः । इच्छाशील आशंसुः । भिक्षुः । अभ्युरुणादौ ॥

---

इति सुभद्राहरणम् ॥ जपदशोरिति । 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायामि'ति शेषः । भट्टिरिति । इत्थं हि तदीयमुदाहरणं —

"तं जागरूकः कार्येषु दन्दशूकरिपुं कपिः ।
आकम्प्रं मारुतिर्दीप्रं नम्रः प्रावेशयद् गुहाम् ॥"

इति । दन्दशूकरिपुं हिंस्रारिमिति तद्व्याख्या जयमङ्गला । दंशस्याविवक्षणेन निन्द्यायां हिंसायां पर्यवसितमिति यावत् । वदेश्चेति । 'यजजपिदंशिवदिभ्यो यङ' इति भोजसूत्रम् । 'वावदूकोऽतिवक्तरी'त्यमरः ॥ कम्र इति । 'कमिता कामुकोऽनुकः । कम्रः कामयिताभीकः कमनः कामनोऽभिक' इत्यमरः । दण्डनाथ इति । भोजकृतसरस्वतीकण्ठाभरणव्याख्यातायम् । 'बहुलाधिकारात कम्रः कर्मण्यपी'ति तद्वचनम् । कम्रं मुखमिति कर्मण्युदाहरणमिदं मुखस्याचेतनत्वात् ।

"कम्रो निसर्गादाकल्पैर्दीनः पुरवधूजनः ।
धीरं तस्य तदा चित्तं जिहीर्षुरपि नाहरत ॥"

इति सुभद्राहरणे । अत्र आकल्पैरित्यस्य पूर्वत्राप्यन्वये कम्र इति कर्मण्यप्युदाहरणम् ॥ सन्नन्तादिति । आशंसाभिक्षिवन्नायं सन् कश्चन पृथग्धातुरिति

## विन्दुरिच्छुः (३. २. १६९)

ज्ञानशीलो विन्दुः । इच्छाशील इच्छुः । 'भाषायां धाञ्कृञ्सृजनिगमिनमिभ्यः किकिनौ वाच्यौ लिड्वच्च' (वा. ३-२-१७१)। द्वयोः स्वरे भेदः । कित्त्वादाल्लोपः । लिड्वत्त्वाद् द्वित्वं कसुवत् । दधिर्धर्त्ता । कृञो यणि कृते स्थानिवत्त्वाद् द्वित्वम् । उरदत्वादि । चक्रिः । सस्रिः । जनेः 'गमहन'—(६-४-९८) इत्युपधालोपादि गमिकसुवत् । नस्य चुत्वम् । जज्ञिः । नमेर्द्वित्वे 'अत एकहल्मध्य'—(६-४-१२०) इत्येत्वाभ्यासलोपौ । नेमिः । 'सासहिवावहिचाचलिपापतीनां निपातनम्' (वा० ३-२-१७१) इति वार्त्तिकाद् यङन्तेभ्यस्तेभ्यः किकिनौ ॥

## स्वपितृषोर्नजिङ् (३. २. १७२)

स्वप्नज् । पदत्वे स्वप्नक्[1] स्वापशीलः । ङित्त्वादगुणः णत्वम् । तृष्णक् । 'धृषेश्च वाच्यम्' (वा० ३-२-१७२) । धृष्णक् ॥

---

भावः, व्याप्तिन्यायादनभिधानाच्च । 'अथ रिरंसुममुं युगपद्गिरावि'ति । माघः । 'आशंसुराशंसितरि' इत्यमरः । 'नहि भिक्षुकाः सन्तीति स्थाल्यो वा नाधिश्रियन्त' इति पतञ्जलिः । असूयुरिति । कण्ड्वादिभ्यो यक् । उणादिघटक उन्प्रत्यये सिद्धमिदम् ।

"इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।"

इति गीता ॥ ज्ञानशील इति । अपां बिन्दुरित्यादि तु विन्देरवयवार्थाद्दौणादिक उरिति दण्डनाथः । इच्छुरिति । 'अनिच्छवोऽपीश्वरकल्पनाबलादिच्छन्ति कुर्वन्ति फलाय मानवाः' इति कल्पनावली । भाषायामिति । 'आद्दगमहनजनः किकिनौ लिट् चे'ति सूत्रस्थमिदं वार्त्तिकम् । पृथग्वचनेन आद्दगमहनजनां छन्दस्येव प्रायः प्रयोग इति लभ्यते । सामान्यतः सर्वेषामाकारान्तानां दापाप्रभृतीनाम्, ऋकारान्तानां भृवृप्रभृतीनां हन्तेश्च छन्दसि, विशिष्य धाधातोराकारान्तस्य कृसोः ऋकारान्तयोः जनिगम्योर्भाषायामपि, नमेर्भाषायामेवेति विवेकः फलितः । सासहीत्यादि ।

---

1. 'निनमि' इति केरलवर्मदेवीयपाठः.

शॄवन्द्योरारुः (३. २. १७३)

गुणः । शरारुर्हिंस्रः । वन्दारुः ॥

भियः क्रुक्लुकनौ (३. २. १७४)

कित्त्वादगुणः । भीरुः । भीलुकः । 'क्रुकन्नपि वाच्यः' । (वा० ३-२-१७४) भीरुकः ।

स्थेशभासपिसकसो वरच् (३. २. १७५)

स्थावरः । ईश्वरः । स्त्रियामीश्वरा । ईश्वरीति ईश्वन्शब्दात् ङीब्रौ । औणादिको वरड् वा । भास्वरः । 'पिसृ गतौ' । पेस्वरः । विकस्वरः । प्रवदनशीलः प्रवद्वर इति च कौमुदी ॥

यश्च यङः (३. २. १७६)

---

"स्वयंवरं भीमनरेन्द्रजाया दिशः पतिर्न प्रविवेश शेषः ।
प्रयातु भारं स निवेश्य कस्मिन्नहिर्महीगौरवसासहिर्यः ॥"

इति श्रीहर्षः ॥ स्वपितृषोरिति । 'स्वप्नक् शयालुर्निद्रालुः' इति, 'लुब्धोऽभिलाषुकस्तृष्णगि'ति चामरः ।

"तं विन्दुरिति विद्वांसो वदान्य इति भिक्षवः ।
आसन्नस्वप्नजं वीरमनुव्रजितुमिच्छवः ॥"

इति सुभद्राहरणम् ॥ शरारुर्हिंस्र इति । अयमेव विपूर्वो विशरारुर्विशरणशीलः । 'विशरारुमाषकृषिभूषिता धरा' इति कावेरीतीरवर्णनम् ॥ क्रुकन्नपि वाच्य इति । 'भियः क्रुकन् क्लुकन्' इति भोजः । 'भीरुकभीरवाणि भूरिकाननानि' इति गीतिका ।

"भीरुग्रामोपशल्येषु वन्दारुजनमागतम् ।
विकस्वरमुखोऽगच्छद् बिभ्राणो भास्वरं धनुः ॥"

इति सुभद्राहरणम् ॥ पिसेति । 'पिसृ पेसृ गताविति' भौवादिकयोरुभयोः सामान्यग्रहणम् । पेस्वर इति रूपम् । उभयपाठे फलं तु पिपिसतुः पिपेसतुरिति लिटि रूपभेदः । ङीब्राविति । 'वनो र चे'त्यादिः । वरड् वेति । टित्त्वात् ङीप्सिद्धिरिति भावः ।

यङन्ताद् याधातोर्वरच् स्यात् । चकाराद् यङोऽकौटिल्यार्थत्वं चेति माधवः । याय।य वर । अतो लोपः । यायाय् वर 'लोपो व्योः—(६-१-६६) इति यलोपः । भृशगतिशीलो यायावरः ॥

**भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् (३. २. १७७)**

एभ्यस्तच्छीलादौ क्विप् स्यात् । क्विपः सर्वलोपः । विभ्राज् । पदत्वे[1] । व्रश्चादिषः । विभ्राट् । भाः । धुर्व् । राल्लोपः । धुर् । पदत्वे 'र्वोः—(८-२-७६)इति दीर्घः । धूर्वति हिनस्ति वोढारमिति धूः धुरौ । विद्युत् । ऊर्ज् । पदत्वे कुत्वचर्त्वे । ऊर्क् बलवान् । भावे तु सम्पदादिक्विब् वक्ष्यते । पॄ 'उदोष्ठ्यपूर्वस्य'(७ १-१०२)इत्युत्वम् । पुर् । पदत्वे पूः । जूः इति निपातनाद् दीर्घः । अदीर्घपाठे तूत्तरसूत्राद् दृश्यत इत्यनुवृत्त्या दीर्घः । जूः जुवौ । ग्रावस्तुन्नामर्त्विक् ॥

"जङ्गमस्थावरप्राणिशरण्योऽथ ययौ क्रमात् ।
पेस्वरानुचरोऽरण्यममरेश्वरनन्दनः ॥"

इति सुभद्राहरणम् ॥ माधव इति । अनुक्तसमुच्चयार्थत्वाच्चकारस्य । समुच्चीयमानानां समानयोगक्षेमत्वमावश्यकमिति. विचारे तु नेदं सङ्गच्छते । तदा अकौटिल्यार्थत्वं प्रयोगोपाधिर्मन्तव्यः । यायाय् + वर इति । यलोपेऽल्लोपस्य स्थानिवत्त्वं तु न शङ्क्यम् । 'न पदान्ते'ति तत्र निषेधात् । अल्लोपस्य स्थानिवत्त्वमाश्रित्य आल्लोपोऽपि प्रसरन् 'वरे लुप्तं न स्थानिवदि'ति वचनेन वारणीयः । भृशगतिशील इति । सामान्यतो यङोऽर्थमाश्रित्य चकारलब्धमकौटिल्यार्थत्वं च विचिन्त्यमिदम् ।

"यायावरानुयातस्य स्थीयते केन संयुगे ।"

इति रावणार्जुनीयम् । सर्वलोप इति 'लशक्वि'ति ककारस्य, 'हलन्त्य'मिति पकारस्य, 'वेरपृक्तस्ये'त्यवशिष्टस्यापि लोप इति भावः । विधाने फलं तु प्रातिपदिकत्वसम्पादनेन पदत्वानुगुणप्रक्रियावशात् पूर्वत्र विकारापादनमेव । यथा—विभ्राज् विभ्राट् इत्यादि । वोढारमिति । तेन दुर्वहत्वं धुरः सामान्यतो लक्ष्यम् । अतः सुवहमर्थजातं न धूःपदव्यवहार्यं भवति । र्वोरितीति । रेफवान्तयोरुपधाया इको दीर्घः पदान्ते हलि चेति तदर्थः । तेन धकारोपर्युकारस्य दीर्घः । इह पदान्तत्वं निमित्तम् । उदोष्ठ्येति । ओष्ठ्यपूर्वो य ऋ-

1. 'त्वे वि' क. ख. पाठः.

## अन्येभ्योऽपि दृश्यते (३. २. १७८)

उक्तादन्येभ्योऽपि तच्छीलादिषु क्विब् दृश्यते । भित् । छित् । दृश्यत इत्युक्तेर्यथादर्शनं क्वचिद्[1] दीर्घाद्यपि । आयतं स्नौतीत्यायतस्नूर्गौः । आयतस्तूरिति स्तौतेराह माधवः । 'ध्याप्योः प्रसारण'मिति भाष्यम् । धि आ । पूर्वरूपम् । धि । 'हलः'(६-४-२) इति दीर्घः । सुष्ठु ध्यानशीलः सुधीः । एवमाप्यायतेः 'लोपो व्योः—'(६-१-६६) इति यलोपे कृते प्रसारणम् । आपीः । श्रीवागादिगुणादौ वक्ष्यते ॥

## भुवः संज्ञान्तरयोः (३. २. १७९)

नाम्नि मध्यस्थे च वाच्ये भुवः क्विप् । अग्निभूः स्कन्दः । वर्षाभूः पुनर्नवा नामौषधिः । ऋणदाने मध्यस्थः प्रतिभूः ॥

---

कारस्तदन्तस्याङ्गस्य उदादेशो भवतीत्यर्थः । एवं ऋकारस्य स्थाने भवन्नयं रपरः सम्पद्यते उर् इति । 'धुरो यड्ढकौ' इति भगवान् पाणिनिः । निपातनाद् दीर्घ इति । 'जवतेर्दीर्घश्च निपात्यत' इति काशिका । 'अन्येभ्योऽपि दृश्यत' इति सामान्यत एव सिद्धे ताच्छीलिकैर्बाधो मा भूदिति पृथग्वचनम् । वासरूपविधेरत्राभावात् । उक्तादिति । प्रातिस्विकतया प्रकृतित्वेन परिगृहीतादित्यर्थः । भित् छिद् इति । 'क्विप् चे'ति कर्तरि विहितः सोपपदेभ्य इत्याशयेनेदम् । निरुपपदोदाहरणं भाष्येऽपि स्पष्टमुच्यते । क्विब्विधिरनुपपदार्थः पचेः पक्, भिदेर्भित्, छिदेः छिदि'ति । यथादर्शनं क्वचिद् दीर्घाद्यपीति । आदिना क्वचिद् द्विर्वचनं क्वचित् सम्प्रसारणं च परिभाष्यते । आयतस्नूरिति । 'ष्णु प्रस्रवणे' इति धातो रूपमिदम् । अत्र दीर्घः । एवमायतस्तूरिति माधवसम्मतेऽप्युदाहरणे । क्वचिदसम्प्रसारणं वचेर्वागिति प्रच्छेः प्राट् इत्यादौ । क्वचित् सम्प्रसारणं सुधीः आपीरिति । भाष्यमिति । प्रकृतसूत्रे 'ध्यायतेः सम्प्रसारणं चे'त्येव दृश्यते । भट्टपादसम्मतोऽयं पाठः स्याद् दाक्षिणात्यः साधुः । क्वचिद् द्विर्वचनम् । विद्युत् जगत् जुहूरित्यादि । अत्र वचनं 'द्युतिगमिजुहोतीनां द्वे चे'ति । 'सन् सुधीः कोविदो बुध' इत्यमरः ॥ मध्यस्थे चेति । अन्तरशब्दार्थविवरणमिदम् । साक्षिणीत्यर्थः । 'धनिकाधमर्णयोरन्तरे यस्तिष्ठति स प्रतिभूरुच्यत' इति काशिका । तदिदं विव्रियते

---

1. 'धीः । धीः । ए' ग. पाठः.

## विप्रसंभ्यो ड्वसंज्ञायाम् (३. २. १८०)

एभ्यः परस्य भुवोऽसंज्ञायां डुः स्यात् । डित्त्वाट्टिलोपः । विभुः । प्रभुः । सम्भुः उद्भविता ।

संज्ञायां तु विभूः कश्चिन्मित्रद्र्वादिरिहेष्यते ।
मित्रानुगामी मित्रद्रुः शम्भुः शंरूपको भवन् ॥
मण्डूकार्थस्तु वर्षाभूरुदन्तश्चेदनेन डुः ।
ऊदन्तत्वे तु संज्ञोक्तः क्विब् द्वेधाप्याह माधवः ॥
एवं कृपां लात्यादत्ते कृपालुरिति डुर्भवेत् ।
स्पर्धालुश्चैवमुन्नेयः स्वयंभूश्चेति कौमुदी ॥

## धः कर्मणि ष्ट्रन् (३. २. १८१)

धेटो धाञोऽपि कर्मार्थे ष्ट्रन् स्यात् । षे लुप्ते ष्टुत्वनाशात् त्र इति प्रत्ययः । धेट आत्वम् । षित्त्वान् ङीष् ।

तत्र बाला धयन्त्येनामिति धात्र्युपमातरि ।
भैषज्यार्थं दधत्येनामिति स्यादामलक्यपि ॥

---

ऋणदान इत्यादिना । 'प्रतिभूरुत्तमर्णाधमर्णयोरन्तरस्थ' इति दण्डनाथः । 'स्युर्लग्नकाः प्रतिभुव' इत्यमरः ॥ उद्भवितेति । सम्भोरर्थकथनमिदम् । 'सम्भुर्जनिते'ति वृत्तिकारः । विभूरिति । पूर्वसूत्रेण. क्विबन्त इति भावः । मित्रद्र्वादिरिति । 'डुप्रकरणे मित्रद्र्वादिभ्य उपसंख्यानं धातुविधितुक्प्रतिषेधार्थम्' इति भाष्यम् । क्विपि तु अमि उवङ् अन्यत्र तुक् च स्यातामितीह वचनं क्रियते । मित्रद्रुरिति भट्टपादाभिमतः पाठः । मुद्रितभाष्यादौ मितद्र्वादिरित्येव दृश्यते । मित्रानुगामीति । मित्रद्रोरर्थकथनमिदम् । आदिना शम्भोर्ग्रहणमुदाहरति — शम्भुरिति । मण्डूकार्थस्त्विति । संज्ञात्वं स्फोरयत्यनेन । अनेन डुरिति । असंज्ञायामिति शेषः । 'वर्षाभ्वी कमठी दुली'ति ङीषन्तत्वलाभाय ह्रस्वान्तत्वमाश्रयणीयमिति संज्ञायामपि कश्चिदुदन्तं मन्यमानो माधवमतमवष्टम्भयति — द्वेधाप्याह माधव इति । अनेन शम्भुरपि संज्ञायां सिद्धः । अथैवमसिद्धानपि कांश्चन शब्दान् संगृह्णाति — एवं कृपामित्यादिना । मित्रद्र्वादिरित्यादिग्रहणस्य प्रपञ्चनमिदं सम्भाव्यते । लातिना व्युत्पत्तिप्रदर्शनमसंज्ञात्वं द्रढयितुम् । धाञोऽपीति । धा इति सामान्यग्रहणादिति शेषः ।

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे (३. २. १८२)

ष्ट्रन् स्यात् । लवनसाधनं दात्रम् देशान्तरं नेतुं साधनं नेत्रम् । शासिर्हिंसार्थः सेट्त्वादिटि प्राप्ते ।

तितुत्रतथसिसुसरकसेषु च (७. २. ९)

तिप्रभृतिषु दशसु प्रत्ययेष्विण् न स्यात् । शस्त्रम् । तुतथादय उणादौ । यु मिश्रणे । योत्रम् । चोः कुः । योक्त्रं रज्जुः । स्तोत्रम् । खरि चर् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मिहेर्ढत्वादि । मेढ्रम् । पत्त्रम् । दंश इति धातुः । छशां षः । ष्टुत्वम् । दंष्ट्रा । अनित्यः षितां ङीष् । 'नहो धः' । 'झषस्तथोः—' (८-२-४०) इति तस्य धः । ङीष् । नद्ध्री रज्जुः । पाधातोश्च भोजः । पात्रं पात्री ॥

हलसूकरयोः पुवः (३. २. १८३)

एतयोरङ्गे वाच्ये पुवः करणे ष्ट्रन् । भूशोधनसाधनत्वाद्धलसूकरयोर्मुखं पोत्रम् ॥

अर्तिलूधूसूखनसहचर इत्रः (३. २. १८४)

एभ्यः करणे इत्रः स्यात् । गतिसाधनत्वाद् अरित्रम् । लवित्रम् । धुवः कुटादित्वादगुणे उवङि धुवित्रमित्येव रामहरौ । कुटादिङित्त्वस्यानित्यत्वाद्धवित्रमिति माधवः । सवित्रम् । खनित्रम् सहित्रम् । लोकांश्चरति व्याप्नोत्यनेनेति चरित्रम् । वहेश्च भोजः । वहित्रं पोतः ॥

---

उभयोरप्युदाहरणं कारिकया विशदयति — तत्रेति । एनामिति कर्मार्थतामदर्शनाय । लवनसाधनमिति । 'दाप् लवन' इति धातोः ष्ट्रनिति विवरणायेदम् । 'दैप् शोधन' इत्यस्य तु नेह ग्रहणमनभिधानादिति हरदत्तः ॥ उणादाविति । तत्रेडभावो द्रष्टव्य इति भावः । दंष्ट्रा । अनित्यः षितां ङीषिति । 'अजादित्वात् टाप् न ङीषि'ति काशिका । भोजस्तु ङीषभावाय 'दशेरषिद्' इत्येव सूत्रयति । दंशेत्यनुनासिकलोपघटितनिर्देशादकिङ्त्यपि लोपः क्वचिदित्यास्थाय ल्युटि दशनमुदाजहार काशिका । भोज इति । इदं च भोजीयसूत्रम्—

## पुवः संज्ञायाम् (३. २. १८५)

**करणे इत्रः स्यात् । पवित्रम् । लक्षणया पवित्रो देशः, पवित्रा कथेति ॥**

---

'नी - दाप् - शसु - यु - युज - स्तु - तुद - सि - सिच - मिह - पत - पा-नाहिभ्यः करणे' ।

"शस्त्रेण येन जयिनाप्युत भूतधात्री—
स्तोत्रं पवित्रमिति यस्य पठन्ति लोकाः ।
पत्राणि यस्य विविधानि वहन्ति योधाः
कृत्वा नु मेतमरिमस्यति कोऽनुगात्रम् ॥"

इति रावणार्जुनीयम् । **पुव** इति । पूङ्पूञोरुभयोर्ग्रहणमविशेषात् । धात्वर्थयोग्यतां दर्शयति — **भूशोधनेत्यादिना** । **गतिसाधनत्वादिति** । 'ऋ गतावि'त्यर्थस्मारकमिदम् । **माधव** इति । 'कुटः किच्चे'त्यत्र प्रत्ययेऽनुशिष्यमाणं किरेत्त्वं गुणनिषेधात्मकसमानफलकं ङित्त्वमनित्यं मन्यत इति तदाशयः । **व्याप्नोतीति** । चरेर्गत्यर्थमादायेदं विवरणम् । **भोज** इति । 'अर्ति-लू-धू-सू-खनि-सहि-वहि-चरिभ्य इत्रः' इति तदीयं सूत्रम् । 'पोतः शिशौ वहित्रे च गृहस्थाने च वाससि' इति मेदिनी ।

"वराहपोत्रव्रणिता विजगाहे वनस्थलीः ।
विकसत्कुसुमा मन्दमारुतोद्धूतपल्लवाः ॥
सखनित्रलवित्रान् स वनेऽपश्यद् वनेचरान् ।
अरित्रैर्नयतो नावस्तोये तोयचरानपि ॥"

इति सुभद्राहरणम् ॥ **पवित्रमिति** । दर्भपवित्रमिति केरलवर्मदेवीयः पाठः । दर्भपदेन सुप्रसिद्धं पवित्रे संज्ञात्वं विशदमिति स्फोरयितुं तदुपादानं सार्थम् । वैदिकगोष्ठ्यां केवलेनापि दर्भनिर्मित एव वृत्तिः सिद्धेति विनापि दर्भपदमविकला प्रतीतिः । **लक्षणयेति** । संज्ञायां नपुंसकमिदं विशेष्यनिघ्नतया त्रिलिङ्गमेव प्रयुज्यत इति दर्शयितुमिदम् । दर्भे योगरूढोऽयं पवित्रशब्दः रूढिभागपरित्यागाद् योगमात्रेणान्यत्रापि प्रवर्तत इति भावः । संज्ञायां तु पवित्रं बर्हिरित्युदाहरणम् । दर्भो वा पवित्रम् । दर्भे बर्हिषि च योगरूढोऽयं

---

१. 'त् । अर्भः प' ग. पाठः.

प्रबोधी प्रतिबोधी च भावी प्रस्थाय्यमी नव ॥

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (३. ३. १०)**

धातोः स्वाभिधेयक्रियासिद्ध्यर्थे क्रियान्तर उपपदे भविष्यदर्थे एतौ स्तः। तुमुनो नित्त्वं स्वरार्थम्। उकार उक्त्यर्थः। तृज्वत् प्रक्रिया। भोक्तुम्। कृदन्तत्वात् सुपि कर्तव्ये,

तुमुन्क्त्वाप्रत्ययादीनां सत्त्वभूतार्थवर्जनात्।
सामान्योक्तः सुरेव स्यादिति न्यासादिषु स्थितम् ॥

भोक्तुं सु।

**कृन्मेजन्तः (१. १. ३९)**

मान्त एजन्तश्च कृच्छब्दोऽव्ययसंज्ञः ॥

**अव्ययादाप्सुपः (२. ४. ८२)**

अव्ययात् परस्य आपः सुपश्च लुक् स्यात्। भोक्तुं व्रजति। ण्वुलि भोजको व्रजति। अत्र भोजनक्रियार्था व्रजनक्रिया ॥

---

इदम् 'अनद्यतन उपसङ्ख्यानम्' इति वचनेन विशेषविहितेन साध्यते। अन्यथा तत्र लुटा बाधात्। गम्यादीन् कारिकया संगृह्णाति—गमीत्यादिना।

"तीर्थानि गामिभिः सार्धं गमी तीर्थानि सोऽव्रजत्।
पुण्यरम्यकथाशौण्डैः सर्वैर्मुनिगणैः सह ॥"

इति सुभद्राहरणम्॥ क्रियार्थायामिति। क्रिया अर्थः प्रयोजनं साधनीयत्वेन यस्याः सा क्रियार्था। क्रियासाध्यभूतक्रियावाचकाद् धातोरिति फलितम्। तदाह—स्वाभिधेयक्रियेत्यादिना। स्वशब्देन तुमुन्ण्वुलोः प्रकृतिर्धातुर्गृह्यते। क्रियान्तर इति। तेन भविष्यन्त्यस्य चरणौ इत्यादौ न। क्रियार्थायामित्यभावे गच्छतस्ते स्खलिष्यति चरण इत्यत्रापि स्यात्। भोक्तुं व्रजति, पाचको गच्छतीत्याद्युदाहरणम्। भोजनार्था पचनार्था गमिक्रिया चेहोपपदम्। सत्त्वभूतार्थवर्जनादिति। 'अव्ययकृतो भाव' इति वार्तिकेन त्वातुमुनादीनामसत्त्वभूतभावे वृत्तेरित्यादिः। सत्त्वभूतार्थत्वे तु द्रव्यवल्लिङ्गसङ्ख्याद्यन्वयेनाव्ययत्वमेव नश्येदिति भावः। सामान्योक्त इति। 'अव्ययादाप्सुप' इति शास्त्रसाधितोऽपि। 'ण्वुल्तृचौ' इति सामान्यविहिते ण्वुलि सति पुनर्विधानं भविष्यति क्रियार्थोपपदायां क्रियायामुपपदे ण्वुल्लृटौ

भाववचनाश्च (३. ३. ११)

उक्तप्रकारे तुमुनर्थे भाववचना घञादयः स्युः ॥

तुमर्थाच्च भाववचनात् (२. ३. १५)

भाववचनात् तुमुनर्थाच्चतुर्थी स्यात् । पाकाय व्रजति । भोजनाय व्रजति । पक्तुं भोक्तुमित्यर्थः ॥

अण् कर्मणि च (३. ३. १२)

तुमुन्विषये कर्मण्युपपदेऽण् स्यात् । शत्रुलावो व्रजति नृपः । गोदायो व्रजति । शत्रुं लवितुं, गां दातुमित्यर्थः ॥

लृट् शेषे च (३. ३. १३)

तुमुन्विषये भविष्यदर्थमात्रे च लृट् स्यात् । तस्य वा सदादेशः । पक्ष्यन् व्रजति । पक्ष्यामीति व्रजति । इयं तुमुनर्थे तिङस्तिङानन्वयात् अन्वयार्थमितिशब्दः ।

सर्वे चात्राव्ययकृतो भावार्था इति निर्णयात् ।

---

केवलं स्यातां न तृजादयोऽपीति बोधनार्थम् । तेन पठिता गच्छतीत्यादि निवर्त्यते । इदं काशिकायां स्पष्टम् ॥ उक्तप्रकार इति । क्रियार्थायां क्रियायां भविष्यतीति यावत् । भाववचना इति । भाव इत्यधिकृत्य ये घञादयो विहितास्त इति काशिका ॥ तुमर्थादिति । तुमर्थभाववचनभूतघञाद्यन्तादित्यर्थः । तदिदं सिद्धान्तकौमुद्यां स्पष्टम् । 'भाववचनाश्चे'ति सूत्रेण यो विहितस्तदन्तादिति । तादर्थ्ये चतुर्थ्यैव सिद्धेर्व्यर्थमिदमिति तु न शङ्क्यम् । तुमर्थेनैव तादर्थ्यस्याभिधानात् प्रातिपदिकार्थे प्रथमया भाव्ये तन्निवारणार्थतयास्य सफलत्वात् ॥ कर्मणि च । चकारः क्रियार्थक्रियोपपदत्वभविष्यत्त्वयोः सन्नियोगार्थो बोध्यः । 'कर्मण्यणि'ति सामान्यविहितो वासरूपविधेरभावाद् ण्वुला बाधित इति तद्बाधनार्थं पुनर्वचनम् । परत्वात् कादीनप्ययमण् बाधते । अतो गां दातुं व्रजन् गोदायो व्रजतीत्येव, नतु गोदायको गोदो वा साधुरिति फलितम् ॥ तुमुन्विषय इति । शेषे चेति चकारलब्धमिदम् । सदादेश इति । सत्येवं लक्षणहेत्वोरन्यतरोऽप्यर्थो बोधविषयतां प्रतिपद्यत इति विशेषः । इति इति । बुद्ध्येति शेषः । प्रकारवाची वा घटकोऽयमितिशब्दः

भोक्तुं यातीति तुमुना भोजनायेति बोध्यते ॥
अनन्वयत्वादिष्यन्ते ण्वुल्णौ लृट् च कर्तरि ।
भोजको व्रजतीत्युक्ते भोक्ष्यमाण इतीर्यते ॥
न चैषां प्रथमैव स्याद् भोजकैर्गम्यते द्विजैः ।
शत्रुलावान् गतान् पश्य पक्ष्यतां गमनं शुभम् ॥

इति भविष्यदर्थाः ॥

पदरुजविशस्पृशो घञ् (३. ३. १६)

एभ्यः कर्तरि घञ् स्यात् । ञित्वाद् वृद्धिः । गच्छतीति पादः । घित्वात् 'चजोः—'(७-३-५२) इति कुः । गुणः । रोगः । वेशः प्रवेष्टा । 'स्पृशो रोगार्थ इति वाच्यम्' (वा० ३-३-१६ । स्पर्शो रोगो रोगकृद् वा ॥

सृ स्थिरे (३. ३. १७)

---

प्रतिपत्तव्यः । भविष्यति पचनकर्तृत्वप्रकारवानिति यावत् । तुमुनाधव्ययकृतां स्वाभाविकमर्थं बोधयन् वाक्यार्थयोरुदाहरणप्रपञ्चं कारिकया करोति — सर्वे चेत्यादिना । अत्रामी उदाहरणश्लोकाः —

"गायन्तीर्मृगरोधाय तालच्छदनकुण्डलाः ।
मार्गोपकण्ठग्रामेषु सोऽपश्यच्छालिगोपिकाः ॥
विश्रमेषु महर्षीणां पूजायै सोऽन्तिकं ययौ ।
कुशलावः समित्काण्डसन्द्रायश्च ययौ वनम् ॥
द्रोष्यत्सु मुनिमुख्येषु जलानि स्वयमाहरत् ।
भोक्ष्यमाणेषु च स्वादु फलमूलं च फल्गुनः ॥

(सुभद्राहरणम् ।)

इति भविष्यदर्थाः इति । इदमुपरिष्टाद् विधीयमानानां त्रिष्वपि कालेषु सम्भव इत्यर्थं बोधयति । आह च काशिकाकारः — 'भविष्यतीति निवृत्तम् । इत उत्तरं त्रिष्वपि कालेषु प्रत्ययाः' इति ॥ कर्तरीति । कृदिति सामान्याधिकारादित्यादिः । गच्छतीति । पद्यत इति व्युत्पत्त्या गमिकर्तृत्वाय स्वरसतोऽनुदयादित्याशयः । वामनमाधवादयस्तु पद्यत इत्येव व्युत्पत्तिं गृह्णते प्रवेष्टेति । प्रोपसृष्टस्यैव तदर्थे प्रसिद्धेः । रोगार्थ इति

सृधातोः स्थिरे वाच्ये घञ् । कालान्तरं गच्छतीति सारः स्थिरांशः । 'व्याधिमत्स्यबलेष्वपि वाच्यम्' (वा० ३-३-१७)। अतिसारो व्याधिः । विसारो मत्स्यः । सारो बलम् ॥

भावे (३. ३. १८)

धातोर्भावे घञ् स्यात् । वृद्धिकुत्वे । पाकः । त्यागः । युक्, उत्थायः प्रदायः ॥

अकर्तरि च कारके संज्ञायाम् ॥ (३. ३. १९)

संज्ञायां तु कर्तृवर्जिते कारकेऽपि घञ् स्यात् । प्रास्यत इति प्रासः । भारः । आरमन्त्यस्मिन्नित्यारामः । आक्रीडः । चकारादसंज्ञायामपि। हरेर्निवासो व्रजम् । 'कृत्यल्युटो बहुलम्'(३-३-११३)इति बाहुलकात् क्वचित् कर्तर्यपि। 'कक लौल्ये' । काकः । 'दारजारौ कर्तरि

---

वाच्यमिति । 'उपताप इति वक्तव्यमि'ति काशिका । उपतापो रोग इति कैयटः । रोगकृद्वेति । बाधनार्थकस्य चुरादेरिदं रूपमित्यपि विचार्यम् । सन्तप्तस्य सन्तापस्य वेति भानुजिः ॥ स्थिरे वाच्ये इति स्थिरे पदार्थे कर्तरि सतीत्यर्थः । स्थिरतासाधकं निरूपणं कालान्तरं गच्छतीति । व्याधिमत्स्ययोस्तु सोपसर्गस्यैव वृत्तिरिति तदनुगुणमुदाहरणम् अतिसारो विसार इति । बलमिति । 'सारो बले स्थिरांशे चे'त्यमरः ॥

वन्ध्यपादैर्युवेशस्त्रीनिर्वेशेष्वप्यलोलुपैः ।
स्पर्शादिरोगसम्भिन्नभवमण्डलनिःस्पृहैः ॥
पलाशादिसमित्साराराशिभिः परिवारितम् ।

इति सुभद्राहरणम् ॥ भाव इति । भावो भावना सैव च क्रिया इति । भावपदेन धातुवाच्या क्रियाभिधीयते । सा च साध्या सिद्धा चेति द्वयी । अत्र साध्यां तिङादयः सिद्धां घञादयश्चाभिदधत इति विशेषः । 'पुलिङ्गैकवचनं न तन्त्रं लिङ्गान्तरे वचनान्तरे च प्रत्यया भवन्त्येवे'ति काशिका । भवतेः क्रियासामान्यवाचिनो निष्पन्नोऽयं भावशब्दः । तेन कृतोऽयमर्थनिर्देशः सर्वधातुविषयः सम्पद्यते । तेन पचतेः पाकः त्यजतेस्त्यागः इत्यादि सिध्यति । उत्थायः प्रदाय इति ।

णिलुक् च, (वा० ३-३-२०) दारयन्त्युद्वेजयन्तीति दाराः । जरयति सुरतैर्ग्लपयतीति जारः । अत्र णिचा वृद्धौ मित्त्वात् ह्रस्वः स्यात् । तेन णिलुकि कृते लुका लुप्तं न स्थानिवदित्युक्त्या स्थानिवत्त्वकृत-णिज्व्यवधानाभावाद् धातोर्घञ्कृतैव वृद्धिः ॥

## स्फुरतिस्फुलत्योर्घञि (६. १. ४७)

शोभनचलनार्थयोरनयोर्घञ्येच आत्वं स्यात् । स्फारः । स्फालः ॥

## उपसर्गस्य घञ्यमनुष्ये बहुलम् (६. ३. १२२)

घञन्ते परपदे अमनुष्ये वाच्ये उपसर्गस्य बहुलं दीर्घः स्यात् । परीपाकः परिपाकः । अतीसारः अतिसारः । मनुष्ये त्वदीर्घः । निषीदन्त्यस्मिन् पापमिति निषादः । सादकारयोः कृत्रिमे दीर्घः । प्रसी-दन्त्यत्रेति प्रासादः प्राकारः । अन्यत्र प्रसादः प्रकारः । रन् ज् अ ।

---

'आतो युक् चिण्कृतो': इत्यादिः ॥ 'अकर्तरि च कारके संज्ञायाम्' । अक-र्तरीति किम् मिषत्यसौ मेषः' इति काशिका । घञि वान्यत्र वा रूपे भेदाभावे-ऽपि स्वरे विशेषः फलम् । हरदत्तस्तु पदमञ्जर्यां बिभर्त्यसौ भर्तेति प्रत्युदाहरणं वदति । असंज्ञायामपीति । चकारो भिन्नक्रमः सन् संज्ञायां चेत्यनुयन् असं-ज्ञायामपि क्वचिद् घञं समुच्चिनोति । बाहुल्येन संज्ञायां वैरल्येन यथादृष्ट-मसंज्ञायां चेति यावत् । निवास इत्युदाहरणमसंज्ञायाः । काक इति । ककते इति काकः कर्तरि । लुक् चेति लुग्वचनस्य फलं विशदयति — णिलुक् चेत्यादिना ॥ घञि प्रक्रियाविशेषायावतारयति -- स्फुरतिस्फुलत्योरिति । शोभनचलनार्थयोरिति । यथासङ्ख्यमाद्ये शोभनं द्वितीये चलनं चार्थः । काशिकायां तु 'स्फुर स्फुल चलन' इत्येतयोर्धात्वोरित्युभयत्रापि चलनमेव स्वीकृतम् । मन्ये चलनमिदं शोभनजनितस्य तारल्यस्यापरः पर्यायः श्रीभट्ट-पादमते वक्तव्यः । आदेच इत्यनुवर्तते । तदाह एच आत्त्वमिति ॥ उप-सर्गस्येति । 'ढ्लोपे' इत्यतो दीर्घोऽण इत्यनुवर्तते । उपसर्गाद् घञोऽविधानाद् घञन्तमुत्तरपदं गृह्यत इत्याह — घञन्ते परपदे इति । कृत्रिम इति । कृत्रिमं करणेन निर्वृत्तं पुरुषव्यापाराभिनिर्वृत्तमित्यर्थ इति हरदत्तः । प्रासाद-प्राकारयोस्तथात्वं स्पष्टम् । 'वेशादिषु विभाषा दीर्घो भवती'ति काशिका । प्रति-वेशः प्रतीवेशः प्रतिरोधः प्रतीरोधः परिहारः परीहारः इत्यादीन्युदाहरणानि । प्रसादः प्रकार इति । धर्मरूपतया अकृत्रिमत्वात् ॥

## घञि च भावकरणयोः (६. ४. २७)

भावार्थे करणार्थे च घञि परे रञ्जेरुपधाया नस्य लोपः स्यात्। वृद्धिकुत्वे। रागो रञ्जनं तत्साधनं च। रञ्जनाधिकरणं तु रङ्गः। अत्र कुत्वे कृते नस्यानुस्वारपरसवर्णौ। 'अकि लक्षणे नुम्'। घञ्। अङ्कः॥

## परेश्च घाङ्कयोः (८. २. २२)

अनयोः परयोः परिशब्दरेफस्य लत्वं वा स्यात्। पर्यङ्क्यते। चित्रादिभिरिति पल्यङ्कः पर्यङ्कः। 'योगे चेति वाच्यम्'। (वा० ८-२-२२) पलियोगः परियोगश्च चोद्यम्॥

## स्यदो जवे (६. ४. २८)

स्यन्दोऽन्यः॥

## अवोदैधौद्मप्रश्रथहिमश्रथाः (६. ४. २९)

अवपूर्वस्योन्देर्घञ्यवोदः किञ्चिदार्द्रः। इन्धेरेधः। मोचनार्थाच्छ्रन्थेर्घञ्। प्रश्रमः। हिमं श्रथ्यतेऽस्मादिति हिमश्रथश्चन्द्रः। ओद्मस्तुन्दनः। औणादिके मनि नलोपगुणौ॥

---

रञ्जेरित्यादि। श्नान्नलोपः, अनिदितां हल उपधायाः क्ङिति, रञ्जेश्चेत्यतो यावदपेक्ष नलोपः उपधाया रञ्जेरित्यनुवर्तते। राग इति। आभीयासिद्धत्वं तु नलोपस्य न शङ्क्यं, घञाश्रयो नलोपो ञित्त्वाश्रया वृद्धिरिति समानाश्रयत्वविरहात्। रञ्जनमिति भावे। साधनमिति करणे। भावकरणयोरित्यस्य व्यावर्त्यमाह — रञ्जनाधिकरणं त्वित्यादिना। अङ्क इति। 'परेश्च घाङ्कयोरि'ति सूत्रव्याख्यानोत्थापनमिदमङ्कशब्दव्युत्पादनम्॥ लत्वं वा स्यादिति। 'कृपो रो लः' इत्यतो ल इति, पूर्वसूत्राद् विभाषेति चानुवर्तते। घ इति स्वरूपग्रहणं, न 'तरप्तमपौ घः' इति संज्ञायाः। परिघः पलिघ इत्युदाहरणम्। परियोगशब्दस्यार्थमाह — चोद्यमिति॥ स्यद इति। जवेऽर्थे स्यन्दतेर्घञि नलोपो वृद्ध्यभावश्चानेन निपात्येते। स्यन्द इति। प्रस्रुतिरित्यर्थः।

'निःष्यन्दश्चन्दनानां निधिरपि परमानन्दसन्दोहधाम्नाम्।'

इत्याभाणकीयाः॥ उन्दीन्धिश्रन्थीनां घञि नलोपं गुणं चाधिकं यथायथं प्रवेश्य अवोदादीनि रूपाणि निपात्यमानान्यवतारयति — अवोदैधेत्यादिना। नलोपे

उपसर्गात् खल्घञोः (७. १. ६७)

खलि घञि च परे उपसर्गात् परस्यैव लभेर्नुम् स्यात् । उपलम्भः । अनुपसर्गात्तु लाभः ॥

न सुदुर्भ्यां केवलाभ्याम् (७. १. ६८)

अन्योपसर्गरहिताभ्यां सुदुर्भ्यां परस्य लभेः खल्घञोर्नुम् न । सुलाभः दुर्लाभः । अन्योपसर्गयोगे तु स्यादेव । अतिसुलम्भः । 'चजोः' (७-३-५२) इति कुत्वस्य 'न क्वादेः' (७-३-५९) इति निषेधः । कूजः । गर्जः ॥

निष्ठायामनिटामेव कुत्वं वार्त्तिककीर्तितम् ।
तर्जे सेट्त्वेन सन्तर्जः सन्तर्ज्यमिति च ण्यति ॥
सेटां तु यत् क्वचित् कुत्वं रोको दीप्त्यर्थतो रुचेः ।
पञ्चते पङ्क इत्यादि न्यङ्क्वादित्वेन तद् भवेत् ॥

---

'पुगन्ते'ति गुणस्त्विन्धौ न शङ्क्यः । 'न धातुलोप' इति निषेधापत्तेः । अतस्तस्य निपात्यकोटौ प्रवेशः सफलः ॥ परस्यैवेति । 'लभेश्चे'त्येव सिद्धे पुनर्वचनं नियमार्थेति विचार्यमिदम् । उपलम्भ इति । 'य सनिन्द उपालम्भ' इत्यमरः ॥ सुदुर्भ्यामिति तृतीया पञ्चमी वेति पक्षद्वयम् । तत्राद्ये केवलाभ्यामिति सफलं, द्वितीयेऽव्यवहितपरत्वादेव सिद्धे सुप्रलम्भ इत्यादिव्यावृत्तिः स्वरसत एव सिद्धा । तत्राप्यन्योपसर्गदशायामतिसुलम्भ इत्यादौ निषेधवारणाय दलस्य साफल्यं केचिच्चिन्तयन्ति । सर्वमिदं मनसिकृत्य सारमाह — अन्योपसर्गरहिताभ्यामिति । सुलाभो दुर्लाभ इति । खलि तु सुलभदुर्लभौ द्रष्टव्यौ । न क्वादेरिति । कवर्ग आदौ यस्य तस्य धातोश्चजोः कवर्गादेशो न भवतीति तदर्थः । कुत्वविषये सम्प्रतिपन्नलक्ष्यसङ्ग्राहिकाः काश्चन कारिकाः प्रदर्शयति— निष्ठायामनिटामित्यादिना । वार्त्तिककीर्तितमिति । 'चजोः कु घिण्यतोर्निष्ठायामनिटः' इति वार्त्तिकशरीरम् । इदं च 'न क्वादेरि'त्यादिना कथितस्य कान्चित्कनिषेधस्य वैयर्थ्यं निरूपयितुं प्रवृत्तम् । तदिदं स्पष्टमुच्यते महाभाष्ये— कान्चिजित्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनादिति । वार्त्तिकेनासाध्यं लक्ष्यं संजिघृक्षमाणः शङ्कित्वा समाधत्ते—सेटां त्वित्यादिना ।

कुत्वं घञ्येव शुच्युब्जोरुब्जेर्बस्य च दो भवेत् ।
शोकः समुद्र इत्येवं शोच्यमुब्ज्यमिति ण्यति ॥
दहेर्घञ्यवदाघश्च निदाघश्च समार्थकौ ।
अर्हेरर्घश्च संज्ञायामेते न्यङ्क्वादिकुत्वजाः ॥

## भुजन्युब्जौ पाण्युपतापयोः (७. ३. ६१)

अत्र घञ्यगुणत्वमकुत्वं च निपात्यते । भुज्यतेऽनेनेति भुजः । 'उब्ज आर्जवे'। नेर्वैपरीत्यार्थत्वात् कुब्जरोगो न्युब्जः तद्वानप्येवम् ॥

## प्रयाजानुयाजौ यज्ञाङ्गे (७. ३. ६२)

अत्र कुत्वाभावो निपात्यते । ऋतुयाजोपयाजाद्यपीष्टम् । 'नोदात्तोपदेशस्य —'(७-३-३४) इति वृद्ध्यभावः । शमः । भ्रमः । 'अवमिकम्याचमीनामि'त्युक्तेरुद्दामः । कामः । आचामः ।

विरामायामसन्नामा अनुदात्तेषु वृद्धितः ।
उद्यमोपरमौ साध्यौ धातुपाठे निपातनात् ॥

---

न्यङ्क्वादित्वेनेति । न्यङ्क्वादीनां च (७-३-५३) इति सूत्रेण तत्र पठितानां सामान्यतः कवर्गादेशस्य निपतनात् साधुत्वाभ्युपगमादिति शेषः । न्यङ्कु, मद्गु, भृगु, दूरेपाक, बलेपाक, क्षणेपाक, दूरेपाका, फलेपाका, तक्र, वक्र, व्यतिषङ्ग, अनुषङ्ग, अवसर्ग, उपसर्ग, श्वपाक, मांसपाक, मूलपाक-कपोतपाक, उलूकपाक, संज्ञायां मेघनिदाघावदाघार्घाः, न्यग्रोध इति न्यङ्क्वादिः । घञ्येवेति । न्यङ्क्वादिपठितानां प्रायोदर्शनानिदर्शनेनेदम् ॥ उपतापयोरिति । उपतापो रोगः । भुज्यतेऽनेनेतीति । करणाधिकरणयोर्घापवादो हलश्चेति करणे घञिति भावः । न्युब्जपदाभिधेयं निर्वक्ति — नेर्वैपरीत्येत्यादिना । तद्वानपीति । 'न्युब्जिताः शेरतेऽस्मिन्नि'त्यधिकरणे व्युत्पत्तिं प्रदर्शयता काशिकाकारेणेदं स्पष्टीकृतम् । पाण्युपतापयोः किम् । भोगः, समुद्गः । प्रयाजानुयाजाविति । इदमुपलक्षणं यज्ञाङ्गेऽन्यत्रापि कुत्वाभावस्य । तदाह — ऋतुयाजोपयाजाद्यपीष्टमिति । आदिना उपांशुयाजसंयाजाद्या ग्राह्याः । मान्तेषु घञ्युपधावृद्धितदभावौ प्रयोगोपाधिलभ्यौ कारिकाभिः सङ्गृह्णाति — विरामेत्यादि । उद्यमोपरमाविति । अनुदात्तोपदेशतया वृद्ध्या भाव्यमिति शङ्का । निपातनादिति । 'अड उद्यमे',

विरम इति च वामनः ।

वर्धमानाख्य आचार्यो वौ श्रमेर्वेत्यसूत्रयत् ।
विश्रमेर्वेति भोजोऽपि तेन विश्रामविश्रमौ ॥
विश्रम्यमिचमां वेति कौमुदी च जगाद सा ।
अम आमश्रमश्रामो ण्वुलादौ चैवमूह्यताम् ॥
विश्रामस्यापशब्दत्वं वृत्त्युक्तं नाद्रियामहे ।
मुरारिभवभूत्यादीनप्रमाणीकरोति कः ॥
विश्रामशाखिनं वाचां विश्रामो हृदयस्य च ।
विश्रामहेतोरित्यादि महान्तस्ते प्रयुञ्जते ॥

स्थास्नापाहनिव्यधियुधादेः 'घञर्थे कविधानम्' (वा० ३-३-५८) । कित्त्वादाल्लोपः । प्रकर्षेण तिष्ठन्त्यस्मिन्निति प्रस्थः सानुः । एवं प्रस्नः । प्रपिबन्त्यस्यामिति कः । टाप् । प्रपा । हनेरुपधालोपः । विघ्नो विघातः । निहन्यते नियम्यत इति निघ्नोऽधीनः । व्यधेर्ग्रहिज्यादिना यस्य इत्वम् । आविधमायुधं च शस्त्रम् । करणे कः । आद्युक्तेर्निमिषो निमेषः ।

---

'यम उपरमे' इत्यर्थनिर्देशे वृद्ध्यदर्शनादिति यावत् । वामन इति । 'विरम इति निपातनादि'ति वामनसूत्रम् । 'यम उपरम' इति धातुपाठे उपेत्युपसर्गस्यातन्त्रत्वं मन्वान एवमाह । तच्च तत्र वृत्तावपि स्पष्टम् 'अतन्त्रं चोपसर्ग' इति । महान्तस्ते प्रयुञ्जत इति ।

"विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः"

इति महाकविः कालिदासोऽपि । आल्लोप इति । 'आतो लोप इटि चे'त्यादिः । 'स्नुः प्रस्थः सानुरस्त्रियामि'त्यमरः । प्रपेति । 'प्रपा पानीयशालिके'त्यमरः । विघात इति । नैतावता भावार्थो बोध्यः । विहन्यत इति करणव्युत्पत्तेः स्वारसिक्याः सम्भवात् । नियम्यत इति । उपसर्गयोगादिदम् । आविधमायुधमिति । वचन उपसर्गविशेषसमभिव्याहारस्याभावेऽपि सम्भवदर्थतन्त्रमनुसृत्य निरूपणमाविधमित्यादि । आदीति । युधादेरिति वचनगतोऽयमादिः । तेनानुक्ता अपि कतिपये यथाप्रयोगं गृह्यन्त इति भावः । निमिष इति । कित्त्वे प्रयोजनं गुणाभावः । 'निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीरि'ति

स्फुरणं स्फुरः । दीव्यन्त्यत्रेति दिवं स्वर्गः । प्रीतिरेव प्रिय इति च हरः । 'कृआदीनां के द्वे स्त इति वाच्यम्' । चक्रिरितिवद् द्वित्वकार्यम् । करोत्यनेनेति चक्रम् । क्लिद क्लिद हलादिः शेषः । चुत्वम् । चिक्लिदो रसभेदः । एवं क्रीडतेश्चिक्रीडः । 'इगुपध—'(३-१-१३५) इति कर्तरि वा कः ॥

ओक उचः के (७. ३. ६४)

उचेः के परे ओक इति कुत्वं गुणश्च निपात्यते । उच्यति समवैत्यस्मिन् ओको गृहम् । इगुपधात् के न्योकाः शकुन्ताः । इतः परं 'कृत्यल्युटो बहुलम्' (३-३-११३) इत्यतः प्राग् भावेऽकर्तरि च कारक इत्यनुवर्तते ॥

एरच् (३. ३. ५६)

इवर्णान्तात् भावादिष्वजेव, न घञ् । गुणः । चयः । क्रयः । ण्यन्तानामिदन्तत्वादेरच् । णिलोपः । भक्षः । एरजण्यन्तानामिति मते घञ् । उपसर्गदीर्घो भेदः ॥

ऋदोरप् (३. ३. ५७)

ऋदन्तादुवर्णान्ताच्च भावादिष्वबेव । स्तॄ स्तरः । 'भृ भरणे' । भरः । स्तवः । लवः ॥

ग्रहवृदृनिश्चिगमश्च (३. ३. ५८)

एभ्योऽबेव । ग्रहः । वरः । दरः । निश्चयः । गमः । अजपोः स्वरे भेदः । अथानयोः प्राप्तौ घञ्विधिः ॥

---

भारतम् । स्फुरणमिति । अर्थनिर्देशोऽयम् । प्रिय इति । क्त्वादियकि रूपमिदम् ॥ उच्यतीति । 'उच समवाये' इति दैवादिकादिदम् । इगुपधात् क इति । अयं पाठः केरलवर्मसम्मते ग्रन्थे न दृश्यते ॥ न घञिति । असरूपताविरहाद् वासरूपेत्यपि नेह प्रवर्तत इति भावः । भक्ष इति । भक्षयतेरपीदम् । इति मते इति । इदमनार्षमिति कैयटः । भेद इति । उपसर्गस्य घञीत्यादिः ॥ स्तर इति । कृ इत्यादेः कर इत्यादि द्रष्टव्यम् ॥ भेद इति ।

---

१. 'शङ्करः' क. ख. पाठः. २. 'चक्रवद्', ३. 'त्रित्योको' ग. पाठः.

परिमाणाख्यायां सर्वेभ्यः (३. ३. २०)

संख्यायाः प्रस्थादेर्वा परिमाणनाम्नो योगे बाधकस्थलेऽपि घञेव ।

व्रीहेस्त्रयोऽत्र चायास्तिलस्य खारीमितः प्रचायोऽयम् ।
इति संख्यामानाभ्यां प्रमितत्वेऽन्यत्र पश्य धान्यचयम् ॥

इङश्च (३. ३. २१)

इङो भावादौ घञ् । अध्ययनमध्यायः । उपेत्याधीयतेऽस्मादित्युपाध्यायः । 'शॄधातोर्वायुवर्णनिवृतावरणेषु घञ् वाच्यः' (वा० ३-३-२१) । शारो वायुर्वर्णभेदश्च । निवृतं द्यूतोपकरणं, तदपि शारः । 'उपसर्गस्य घञि —' (६-३-१२२) इति दीर्घे नीशारः प्रावरणम् ॥

उपसर्गे रुवः (३. ३. २२)

घञ् स्यात् । संरावः । विरावः । केवलस्य रव इत्यप् ॥

कृत्यल्युटो बहुलमित्यनेन घञवादयः ।
बहुलं व्यतिकीर्यन्ते मञ्जुरावादयस्ततः ॥

---

निश्चय इत्यत्रेदम् । तत्रेवर्णान्ततयाचोऽपि सम्भवात् ॥ परिमाणाख्यायामिति । आख्याग्रहणाद् रूढिपर्यन्तं तात्पर्यं नास्तीत्याह — संख्याया इत्यपि । सर्वेभ्य इति । इवर्णान्ते उवर्णान्ते वा बाधकस्थले सर्वत्रेति यावत् । तदाह — बाधकस्थल इति । उदाहरणं कारिकया — व्रीहेरिति । त्रय इति संख्यया खारीति परिमाणस्य योगं दर्शयितुम् । एवं द्वौ कारौ द्वौ शूर्पनिष्पावौ इत्यादिवृत्तिदिशोदाहरणानि द्रष्टव्यानि । धान्यचयमिति प्रत्युदाहरणम् ॥ इङश्चेति । 'इङ् अध्ययन' इति ग्राहयितुमनुबन्धविशिष्टस्य ग्रहणम् । एरजिति बाधकबाधकं प्रतिप्रसूतमुत्सर्गमनेन वक्ति । उपाध्याय इति । 'आख्यातोपयोग' इति चोदितापादानार्थ इदमिति भावः । घञ् वाच्य इति । 'शॄ वायुवर्णनिवृतेष्वि'ति भाष्यवार्त्तिकम् । प्रावरणमिति । अत्रार्थे—

"गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः ।"

इति भाष्योदाहरणम् । तथाचाकृताच्छादन इत्यर्थ इति कैयटः । शॄधातोः 'ऋदोरप्' इत्यपोऽपवादोऽयं घञ् ॥ अनुपसृष्टादपि रौतेः क्वचिद् घञं पश्यन् समाधानकारिकया संगृह्णाति — कृत्यल्युट इत्यादिना । मञ्जुरावादयः ।

## संमि युद्रुदुवः (३. ३. २३)

संयावः । सन्द्रावः । सन्दावः । 'दु द्रु गतौ' इत्यस्य ग्रहात् पीडार्थस्य दोः सन्दवः । एभ्योऽनुपसर्गे वेति भोजः । यवः यावः । द्रवः द्रावः । दवः दावः ॥

## श्रिणीभुवोऽनुपसर्गे (३. ३. २४)

श्रायः । नायः । भावः । सोपसर्गे प्रश्रयः । प्रणयः ।

भोजस्तु नीभुवोर्वेति प्राह तेन नयो भवः ।
भुवो व्यनुप्रेषु च वा विभावविभवादयः ॥

## वौ क्षुश्रुवः (३. ३. २५)

विक्षावः । विश्रावः ॥

## अवोदोर्नियः (३. ३. २६)

अवनायः । उन्नायः । उन्नयश्च बाहुलकात् ॥

---

आदिना उपसर्गयोगेऽपि क्वचिद्वपि सङ्गृह्यते । तथाचामरः — आरवारावसंरावविरावा इति ॥ गतावित्यस्य ग्रहादिति । गत्यर्थेन द्रुणा सहचरणादिति भावः । वेति भोज इति । 'अनुपसर्गाद् वे'ति तद्वचनम् । 'यावोऽलक्ते पाकभेदे' इति हैमः । 'दवदावौ वनारण्यवह्नी' इत्यमरः ॥ श्रिंणीभुव इति । अजपौ बाधितुमिदम् । वेति प्राहेति । 'अनुपसर्गाद्वे'त्यतो वेत्यनुवृत्य 'व्यनुप्रेषु च भुव' इति तद्वचनम् । तदिदमर्थतः प्रायोगिकं संगृह्णन् विवृणोति — तेनेत्यादिना च वेत्यन्तेन ग्रन्थेन । एतेनाविभाषितः सम्भवोऽपि सिद्धः । इदं प्रभावादिषु प्रादिसमासेन, नये 'कृत्यल्युटो बहुलमि'त्यत्र बहुलग्रहणेन च काशिका साधयति । तेन

"नये च विनये चैव मधुरोदारवृत्तयः ।
प्रभावस्यानुभावोऽयं सम्भवो जनमोदनः ॥"

इत्यादिसिद्धिः ॥ अवोदोरिति । अनुपसर्ग इत्यस्य सङ्कोचनायेदम् । बाहुलकादिति । कृत्यल्युट इति शेषः । 'उदि च नय' इति भोजस्तु घञं विभाषते ॥

प्रे द्रुस्तुस्रुवः (३. ३. २७)

प्रद्रावः । प्रस्तावः । प्रस्रावः । स्रावश्च भोजोक्तः ॥

निरभ्योः पूल्वोः (३. ३. २८)

क्रमाद् योज्यम् । निष्पावः । अभिलावः ॥

उन्न्योर्ग्रः (३. ३. २९)

उद्गारः । निगारः ॥

कॄ धान्ये (३. ३. ३०)

उन्न्योः पूर्वयोः कॄधातोर्धान्यसम्बन्धे घञ् । उत्कारो निकारश्च धान्यक्षेपः । धान्यराशिरिति शङ्करः ॥

यज्ञे समि स्तुवः (३. ३. ३१)

सम्पूर्वस्य स्तोर्यज्ञविषये घञ् । संस्तावो यज्ञे स्तुतिस्तत्स्थानं वा ॥

प्रे स्त्रोऽयज्ञे (३. ३. ३२)

प्रपूर्वस्तॄधातोरयज्ञे घञ् । मणिप्रस्तारः । यज्ञे तु दर्भप्रस्तरः ॥

प्रथने वावशब्दे (३. ३. ३३)

विपूर्वस्तॄधातोः शब्दादन्यत्र प्रथने वाच्ये घञ् । पटस्य

---

स्रावश्चेति । 'स्रुवोऽनुपसर्गाच्चे'ति भोजसूत्रम् । उद्गारो निगार इति । उन्न्योरभावे गरो विषम् ॥ कॄधातोरिति । विक्षेपार्थस्य किरतेर्ग्रहणं, न हिंसार्थस्येति काशिका । धान्यसम्बन्धाभावे तु उन्न्युपसृष्टस्यापि समूहार्थता पुष्पोत्कर इत्यादौ ॥ स्थानं वेति । अधिकरणे प्रत्ययं मत्वेदम् । अयज्ञसम्बन्धे तु संस्तवः । 'संस्तवः स्यात् परिचयः' इत्यमरः ॥ अयज्ञ इति । 'प्रे स्त्रोऽन्यत्रे'ति भोजः । प्रस्तरः पाषाणः । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषदि'त्यमरः । मणिप्रस्तार इति । सूत्रप्रस्तारवृत्तप्रस्तारादयोऽप्युदाहर्तव्याः । अशब्द इति । शब्दादन्यश्चेद् विषय इति यावत् ।

विस्तारः । शब्दस्य तु विस्तरः । गुणविस्तरादयश्चिन्त्या इति वामनः ॥

छन्दोनाम्नि च (३. ३. ३४)

स्तृधातोश्छन्दोनाम्नि घञ् । आस्तारपङ्क्तिश्छन्दः ॥

छन्दोनाम्नि च (८. ३. ९४)

अत्र विपूर्वस्य स्तृधातोः षत्वं स्यात् । विष्टारपङ्क्तिः ॥

उदि ग्रहः (३. ३. ३५)

उद्ग्राहः ॥

समि मुष्टौ (३, ३. ३६)

सङ्ग्रहेर्मुष्टौ घञ् । सङ्ग्राहो मल्लस्य । मुष्टेर्दृढग्रहणं तत् ॥

परिन्योर्नीणोर्द्यूताभ्रेषयोः (३. ३. ३७)

परिपूर्वान्नियो द्यूते निपूर्वादिणोऽभ्रेषेऽर्थे च घञ् स्यात् । परिणायः शाराणाम् । अभ्रेषोऽस्खलनम् । न्याये स्थितः ॥

---

विस्तारो यशसां तदीयवचसां यद्विस्तरस्तद्ध्रुवं
श्रीचित्रोदयवञ्चिनायकमणेर्माहात्म्यमन्यादृशम् ।

इति । चिन्त्या इति । गुणविस्तरादय इति वामनसूत्रस्यानुकरणतां सूचयितुम् । आदिना व्याक्षेपविस्तरादयो ग्राह्या इति तत्रैव वृत्तौ । गुणविषयकं वर्णनं शब्दतः परिणमयितुकामस्य तु लेखन्या विस्तरशब्देन समासे सोऽपि प्रयोगः कामं नयनमर्हतीति परमनव्याः ॥ उद्ग्राह इति । 'मणिर्बिम्बोद्ग्राहे प्रभवति' इति भवभूतिः ॥ परिणाय इति । 'उपसर्गादसमासेऽपी'ति णत्वम् ।

"शाराणां परिणायेन शकुनिर्जयमासवान्"

इति द्रौपदीचरिते । द्यूत इति रुक्मिणीपरिणयः । न्याय इति ।

"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥"

परावनुपात्यय इणः (३. ३. ३८)

क्रमस्यानतिक्रमोऽनुपात्ययः। तस्मिन् वाच्ये परिपूर्वादिणो घञ्। पर्यायेण भुञ्जते ॥

व्युपयोः शेतेः पर्याये (३. . ९ )

व्युपपूर्वाच्छेतेः पर्याये द्योत्ये घञ्। पर्यायेण शयनं विशायः। उपशायः ॥

हस्तादाने चेरस्तेये (३. ३. ४०)

हस्तप्राप्यस्यादानेऽर्थे चौर्याभावे चिञो घञ्। पुष्पापचायः। फलोच्चायः। चौर्येण चेत् पुष्पापचयः। अनासन्नत्वेऽपि। तरुशिखरात् पुष्पापचयः ॥

---

अनतिक्रम इति। अनतिपातः परिपाटीति काशिका। पर्यायेणेति।

"पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता।"

इति चन्द्रालोकः। अनुपात्ययविरहे तु कालस्य पर्ययः। पर्ययोऽन्यथाभवनमिति दण्डनाथः॥ द्योत्य इति। पूर्वत्रानुपात्यये वाच्य इति, इह पर्याये द्योत्य इति च विवरणं, प्रथमे उपसर्गधातुप्रत्ययैः समुदितैरभिधानमिह तस्यैव पर्यायस्य धात्वन्तराद् घञा केवलं द्योतनं च मनसिकृत्य। काशिकायां तु पूर्वत्रापि अनुपात्यये गम्यमाने इत्येव दृश्यते। पर्यायेण शयनमिति।

"उपशायो विशायश्च पर्यायशयनार्थकौ"

इत्यमरः। पर्यायेण शयनं काशिकायामेव व्यक्तीकृतम्। तव राजोपशायः तव राजानमुपशयितुं पर्याय इत्यर्थ इति। पर्याय इति किम्। विशयः संशयः। उपशयः समीपे शयनम्॥ हस्तादान इति। अस्मात् प्रतिप्रत्यासत्ताविति भोजः। पुष्पापचाय इति

"अन्यत्र यूयं कुसुमापचायं
कुरुध्वमत्रास्मि करोमि सख्यः।"

(कुमारसम्भवे)

निवासचितिशरीरोपसमाधानेष्वादेश्च कः (३. ३. ४१)

एषु वाच्येषु चेर्घञ् आदेः कत्वं च । निकायो गृहम् । आकायोऽग्निचिदिति भेदः । आचीयतेऽनेन कर्मेति कायो देहः । उपसमाधानं राशिः । तृणनिकायः । 'राशौ वे'ति भोजः । तेन तृणनिचयोऽपि ॥

सङ्घे चानौत्तराधर्ये (३. ३. ४२)

उत्तराधरभावरहितानामेकरूपाणां सङ्घे वाच्ये चेर्घञ् आदेः कश्च स्यात् । शाब्दिकनिकायः । बहुविधत्वे सूकरनिचयः ॥

आक्रोशेऽवन्योर्ग्रहः (३. ३. ४५)

अवनिपूर्वाद् ग्रहेः शापे द्योत्ये घञ् । अवग्राहो निग्राहश्चास्तु शत्रोः । अभिभवो वधश्चेत्यर्थः । आक्षेपमात्रे प्राह भट्टिः ॥

प्रे लिप्सायाम् (३. ३. ४६)

प्रग्रहेर्लिप्सायां द्योत्यायां घञ् । पात्रप्रग्राहेण चरति भिक्षुः ।

परौ यज्ञे (३. ३. ४७)

परिग्रहेर्यज्ञगतेऽर्थे वाच्ये घञ् । परिग्राहो वेद्याः ॥

नौ वृ धान्ये (३. ३. ४८)

निपूर्वस्य वृधातोर्धान्ये वाच्ये घञ् । नेर्दीर्घः । नीवारः ॥

---

गृहमिति । 'निकायनिलयालयाः' इत्यमरः । निचयोऽपीति । सन्नियोगशिष्टतया घञभावे कत्वमपि नास्तीति यावत् ॥ शाब्दिकनिकाय इति । तत्र मिलिताः सर्वे एव शाब्दिकाः समप्रधाना इति भावः । ग्रहेरिति । 'ग्रहवृदृनिश्चिगमश्चे'त्यपोऽपवादः । लिप्साया विरहे प्रग्रहो रामस्य ॥ वेद्या इति । यज्ञसम्बन्धं द्योतयितुमिदम् ॥ वृधातोरिति । ग्रहिवदपोऽपवादः । नीवार इति ।

'नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः' इति कालिदासः ॥

---

१. 'च्या' ग. पाठः.

उदि श्रयतियौतिपूद्रुवः (३. ३. ४९)

उच्छ्रायः । उद्यावो मिश्रणम् । उत्पावः । उद्द्रावः । उत्तरसूत्राद् विभाषानुवृत्तेरुच्छ्रयसिद्धिः ॥

विभाषाऽऽङि रुप्लुवोः (३. ३. ५०)

आङ्युपपदयोर्वा घञ् । आरावः आरवः । आप्लावः आप्लवः ॥

अवे ग्रहो वर्षप्रतिबन्धे (३. ३. ५१)

अवग्रहेर्वर्षाभावेऽर्थे वा घञ् । अवग्राहः । अवग्रहः ॥

प्रे वणिजाम् (३. ३. ५२)

वणिक्सम्बन्धेऽर्थे वाच्ये प्रग्रहेर्वा घञ् । प्रग्राहः प्रग्रहश्च तुलाग्रहणसूत्रम् ॥

रश्मौ च (३. ३. ५३)

रश्मौ वाच्ये प्रग्रहेर्वा घञ् । प्रग्राहः प्रग्रहो वाश्वस्य ॥

वृणोतेराच्छादने (३. ३. ५४)

प्रपूर्वाद् वृञोऽस्मिन् वाच्ये वा घञ् । प्रावारः प्रवरश्चाच्छादनपटः ॥

क्रियाभ्यावृत्तिसमयसमूहेषु च भोजराट् ।

---

उत्तरसूत्रादिति । वक्ष्यमाणं विभाषाग्रहणमिह सिंहावलोकनन्यायेन सम्बध्यत इति काशिका । उच्छ्रयसिद्धिरिति । तेन 'पतनान्ताः समुच्छ्रयाः' इत्यादि सिद्धम् ॥ रुप्लुवोरिति । ओरपोऽपवादः । आरवः आराव इति । 'आरवारावसंरावविरावा' इत्यमरः । अवग्रह इति । प्रतिबन्धसधर्मा वर्णोऽप्यवग्रहः स्वरोऽपि ॥ वणिक्सम्बन्ध इति । वणिक्सम्बन्धेन तुलासूत्रं गृह्यते नतु वणिक्तन्त्रमिति काशिका । तुलाग्रहणसूत्रमिति फलितोऽर्थः ॥ अश्वस्येति । 'तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च'त्यमरः ॥ वृणोतेरिति । अपोऽपवादः । भोजराडिति । 'क्रियाभ्यावृत्तिसमयसमूहेषु चे'ति चान्तो भागो भोजराजसूत्रस्यैवानुकरणम् । यथाक्रममुदाहरणं —

द्वौ वारावध मे वारो गवां वारश्च सञ्चये ॥

परिवारस्तु ण्यन्ताद् बाहुलकेन कर्तरि घञि । तत्रापि मनुष्येष्वदीर्घः । अन्यत्र परीवाराः कपयः । यक्षकोटिपरीवाराः ॥

परौ भुवोऽवज्ञाने (३. ३. ५५)

परिभुवो धिक्कारे वा घञ् । परिभावः परिभवः ॥

अवे तृस्त्रोर्घञ् (३. ३. १२०)

अनयोर्नाम्न्यनाम्न्यपि घञेव । अवतारः । अवस्तारः । 'त्रो वे'ति भोजोक्तेरवतरोऽपि ॥

अथाब्विधिः ।

'वशिरण्योरब् वाच्यः' (वा० ३-३-५८) । वशः । रणः शब्दः । रणन्त्यत्रेति युद्धं यज्ञश्च ॥

उपसर्गेऽदः (३. ३. ५९)

सोपसर्गाददेरप् ॥

घञपोश्च (२. ४. ३८)

घञपोः परयोः अदेर्घस्लृ स्यात् । प्रघसः । विघसः । अनुपसर्गाद् घास इति घञ् ॥

---

द्वौ वारावित्यादि । सञ्चय इति समूहार्थं दर्शयितुम् । ण्यन्तादिति । परिवारयन्ति प्रभुमिति व्युत्पत्तिर्द्रष्टव्या । ण्यन्ते वृद्ध्यैव दीर्घोपधः सम्पन्न इति भावः । मनुष्येष्विति । 'उपसर्गस्य घञ्यमनुष्य' इति पर्युदासादित्यादिः । तदुदाहरति —कपयः यक्षकोटीति च । 'परिवारपदं कथं प्रयात्येषा' इति स्वप्नवासवदत्ते ॥ अवज्ञान इति । अपोऽपवादः । अवज्ञानम् अनादरः । 'अनादरः परिभव' इत्यमरः । 'परिभवोऽरिभवो हि सुदुःसह' इति माघः ॥ अनाम्न्यपीति । 'पुंसि संज्ञायामि'त्यतः प्रायेणेत्यनुवृत्तेरिदम् । 'प्रायानुवृत्तेरसंज्ञायामपी'ति काशिका । तेनावतारे नद्या इत्यादि सिद्धम् । अवतरोऽपीति । 'निजत्रिनेत्रावतरत्वबोधिकामि'ति श्रीहर्षः ।

अथाब्विधिः ।

रणः शब्दः । रणन्त्यत्रेति युद्धं यज्ञश्चेति । 'वशिरण्योरब्वाच्य' इति वार्त्तिकेऽर्थनिर्देशाभावेन प्रयोगोपाधिव्युत्पत्तिरर्थश्च द्रष्टव्याविति मनसिकृत्येदं

नौ ण च (३. ३. ६०)

निपूर्वाददेरप् णश्च स्यात् । निघसः । णे तु घस्लभावाददेरेव वृद्धिः । न्यादः ॥

व्यधजपोरनुपसर्गे (३. ३. ६१)

अप् स्यात् । व्यधः । जपः । सोपसर्गे तु प्रव्याधः प्रजापः । वेधो वेधनमित्यादि तु 'विध विधाने' इत्यस्यानेकार्थत्वात् ॥

स्वनहसोर्वा (३. ३. ६२)

अनुपसर्गयोरनयोरब् वा स्यात् । स्वनः । स्वानः । हसः । हासः । सोपसर्गे प्रस्वानः प्रहासः ॥

यमः समुपनिविषु च (३. ३. ६३)

अनुपसर्गात् समादिपूर्वाच्च यमेरब् वा स्यात् । यमः यामः । संयमः संयामः इत्यादि ॥

नौ गदनदपठस्वनः (३. ३. ६४)

अब् वा स्यात् । निगदः निगादः इत्यादि ॥

क्वणो वीणायां च (३. ३. ६५)

निपूर्वादनुपसर्गाच्च क्वणेरब् वा । वीणाविषये तु सोपसर्गादप्यब् वा स्यात् । निक्वणः[1] निक्वाणः । क्वणः क्वाणः । वीणायां तु प्रक्वणः प्रक्वाणः इत्यादि ॥

नित्यं पणः परिमाणे (३. ३. ६६)

क्रयाद्यर्थं परिमितत्वेन कृते द्रव्ये वाच्ये पणेर्नित्यमप् स्यात् । पणः ॥

---

विवरणम् ॥ व्यध इति । कर्तरि तु 'श्याद्व्यधे'ति णप्रत्ययेन व्याधः सिद्धः । प्रस्वान इति । अनेन 'निस्वन' इत्यमरोक्तिः 'नौ गदनदपठस्वनः' इति विभाषया सिध्यति ॥ क्वणो वीणायां च । नौ वेति चानुवृत्तौ वीणायांग्रहणमुपसर्गान्तरसमभिव्याहारे वीणानादविषयेऽपं घटयितुम् । तदिदमाशयत उदाहरति — वीणायां तु प्रक्वणः प्रक्वाण इति । 'कल्याणप्रक्वणा वीणे'ति काशिका ॥ क्रयाद्यर्थमिति । परिमाणग्रहणादिदं विवरणम् । व्यवहारे स्तुतौ च पठितोऽप्ययं धातुः प्रकृते परिमाणग्रहणाद् व्यवहारे स्थितः । द्रव्य इति ।

---

1. 'घपि । नि' ग. पाठः.

### मदोऽनुपसर्गे (३. ३. ६७)

केवलान्मदेरप् स्यात् । मदः । सोपसर्गात्तून्मादः । 'सध माद-स्थयोः—' (६-३-९६) इति निपातनान्मादोऽपि ॥

### प्रमदसम्मदौ हर्षे (३. ३. ६८)

अन्यत्र प्रमादः सम्मादः ॥

### समुदोरजः पशुषु (३. ३. ६९)

समुत्पूर्वादजेरप् स्याद् वाच्यं चेत् पशुगोचरम् ।
समजः स्याद् गवां सङ्घ उदजः प्रेरणं गवाम् ॥

अन्यत्र समाजः सताम्, उदाजः काकानाम् । अघञपोरित्युक्त्या-जेर्वीत्वाभावः ॥

### अक्षेषु ग्लहः (३. ३. ७०)

अक्षेषु पणार्थे द्रव्ये[1] वाच्ये ग्लह इति निपात्यते ॥

### प्रजने सर्तेः (३. ३. ७१)

गर्भग्रहणे द्योत्ये सर्तेरप् । गवां गर्भग्रहणार्थः सङ्गमः उपसरः । अन्यत्र प्रसारः । प्रसरविसरादिर्बाहुलकात् ॥

कन्दमूलफलादिनः पूलशः कल्पिते भाण्डक इति यावत् । पुरा खलु द्रव्ययोरेव पूलशः परिकल्पितयोर्विनिमयव्यवहारो लोकयात्राप्रवर्तकः । तदेव सम्प्रति रजत-खण्डे कलसं क्रमशः पणतां प्रतिपन्नम् ॥ मदोऽनुपसर्गे । घञपवादः । उन्माद इति । 'उन्मादश्चित्तविभ्रम' इत्यमरः । मादोऽपीति । प्रयोगोपाधिरयं प्रायो ज्ञापकसाजात्याच्छन्दस्येव दृष्टः ॥ हर्ष इति । 'प्रमदो हर्षः प्रमोदामोदसम्मदा' इत्यमरः । प्रमाद इति । 'प्रमादोऽनवधानते'त्यमरः ॥ समुत्पूर्वादिति । कारि-कया सोदाहरणं विवरणम् । पशुर्लक्षणया ज्ञानहीनेऽपि विद्यते । तस्मात् समजः अज्ञसङ्घः समाजो विज्ञसङ्घ इत्याकारतो भेदः । तदिदं स्फोरयति — समाजः सतामित्यनेन । काकानामिति । नहि काकाश्चतुष्पादः पशव इति भावः ॥ निपात्यत इति । अप् तु सिद्ध एव, लत्वार्थं निपातनमिति काशिका ।

---

१. 'व्ये ग्ल' क. ख. पाठः.

### ह्वः सम्प्रसारणं च न्यभ्युपविषु (३. ३. ७२)

एषु ह्वाधातोः प्रसारणमप् च । हु आ अ । पूर्वरूपम् । हु अ । गुणः । निहव इत्यादि । अन्यत्र घञि युक् । संह्वायः ॥

### आङि युद्धे (३. ३. ७३)

आङि ह्वो युद्धे वाच्ये प्राग्वत् । आह्वयन्तेऽत्रेत्याहवः ॥

### निपानमाहावः (३. ३. ७४)

गवादयः पानार्थमाहूयन्तेऽत्रेति शिलागर्तमाहावः ॥

### भावेऽनुपसर्गस्य (३. ३. ७५)

केवलस्य ह्वाधातोर्भावेऽर्थे[1] प्रसारणमप् च । ह्वानमेव हवः ॥

### हनश्च वधः (३. ३. ७६)

अनुपसर्गाद्धनेरब् वध इत्यादेशश्च स्यात् । अतो लोपः। वधः । चकाराद् घञपि । घातः ॥

### मूर्तौ घनः (३. ३. ७७)

काठिन्ये वाच्ये हन्तेरब् घनादेशश्च । दध्नो घनः काठिन्यम् । काठिन्नेऽप्यस्ति । घनं दधि ॥

---

ग्लहिं प्रकृत्यन्तरं केऽपि मन्यन्ते । तन्मते ग्लाह इति घञ् । 'व्यात्युक्षीमभिसरणग्लहामदीमन्' इति माघः ॥ आह्वयन्त इति। 'स्पर्धायामाङ' इति आत्मनेपदस्वारस्यादिदम् ॥ आहाव इति । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः । तदिदं विव्रियते — गवादय इत्यादिना ॥ भाव इति । अकर्तरि च कारक' इति निवृत्त्यर्थमिदम् । उपसृष्टात्तु सत्यप्यर्थान्तरमाह्वादौ प्रसिद्धम् । 'हवे हवे सुहवं शूरमिश्रमि'ति श्रुतिः ॥ घात इति । वृद्धौ कुत्वे तत्वे च रूपमिदम् ॥ घन इति । अब् घत्वं च निपात्यते । मूर्तिः काठिन्यम् । घनं

---

१. 'ह्वो भावे' क, ख. पाठः.

अन्तर्घणो देशे (३. ३. ७८)

वाहीकेषु कश्चिद् देशोऽयम् । सावकाशः प्रदेश एवान्तर्घण इति शङ्करः । अन्तर्घन इति वा पाठः ॥

अगारैकदेशे प्रघणः प्रघाणश्च (३. ३. ७९)

बहिरलिन्दोऽयम् ॥

उद्घनोऽत्याधानम् (३. ३. ८०)

यस्मिन् काष्ठे निधाय वृक्षास्तक्ष्यन्ते, स उद्घनः ॥

अपघनोऽङ्गम् (३. ३. ८१)

करणेऽयोविद्रुषु (३. ३. ८२)

एषु पूर्वेषु हनेः करणेऽप् घनादेशश्च । अयोहननसाधनमयोघनः । विघनः समीकरणसाधनम् ॥

पूर्वपदात् संज्ञायामगः (८. ४. ३)

संज्ञायां पूर्वपदस्थनिमित्तात् परस्य गकाराव्यवहितस्य नस्य णः स्यात् । द्रुर्हन्यतेऽनेनेति द्रुघणः कुठारभेदः । सूत्रे सर्वणामानीत्यनुक्तेरस्य णत्वस्यानित्यत्वज्ञापनाद् द्रुघनोऽपि । स्त्रियामयोघनीत्यादीष्टम् ॥

स्तम्बे क च (३. ३. ८३)

स्तम्बपूर्वाद्धनेः करणे कः स्यादब्घनादेशौ च । तस्य कित्त्वादुपधालोपः । हस्य कुत्वम् । स्तम्बघ्नः स्तम्बघनश्च व्रीह्यादिस्तम्ब-

---

दघीति तु पापादिवद् विशेष्यनिघ्नतयोपचारः ॥ सावकाश इति । परितोऽपावृतोऽन्तरलिन्दप्रदेश इत्याशयः । प्रघणः बहिस्तु लघुरपावृत इत्याशयः ॥ अपघन इति । 'अङ्गं प्रतीकोऽवयवोऽपघन' इत्यमरः ॥ पूर्वपदादिति । 'रषाभ्यां नो णः', 'अट्कुप्वाङ्नुंव्यवायेऽपी'ति चानुवर्तते । अग इति व्यवधायकपर्युदासः । तदाह—गकाराव्यवहितस्येति । द्रुघणः । इह णत्वमरीहणादिषु पाठात्, 'पूर्वपदात् संज्ञायामग' इति वेति काशिका । अग इति किम् । ऋगयनम् । अनुक्तेरिति । सर्वनामसंज्ञायामित्यादिः । अयोघनीत्यादीति । अयोहननीति स्यात् । इदं च 'करणाधिकरणयोश्चे'ति ल्युटि बोध्यम् । अपि तु

लवित्रम्। 'द्विषां स्तम्बघनो भुज' इति लक्षणया। 'तृणस्तम्बमर्दी स्तम्बघ्नः पदन्यास' इत्यपि भट्टिः। स्त्रियां स्तम्बघ्ना स्तम्बघनेतीष्टम्॥

परौ घः (३. ३. ८४)

परिहनेः करणे अब् धातोर्घशब्दादेशश्च। अतो लोपः। 'परेश्च घाङ्कयोः' (८-२-२२) इति वा लत्वम्। पलिघः परिघः। बाहुलकात् प्रतिघः कोपः॥

उपघ्न आश्रये (३. ३. ८५)

लताया उपघ्नस्तरुः। आश्रयः समीपमित्येवान्ये। शैलोपघ्नो देशः॥

सङ्घोद्घौ गणप्रशंसयोः (३. ३. ८६)

उद्घः प्रशस्तवाची॥

निघो निमितम् (३. ३. ८७)

समारोहपरिणाहं निमितम्। निघो वृक्षः॥

ड्वितः क्त्रिः (३. ३. ८८)

ड्वितो धातोर्भावे क्त्रिप्रत्ययः स्यात्। डुकृञ्। 'आदिर्ञिटुडवः' (१ ३.५) इति डोरित्त्वम्। कित्त्वादगुणः। कृ त्रि॥

---

अयाघनेत्यपीष्टम्। लक्षणयेति। द्विषां तावन्निस्सारताव्यञ्जनं प्रयोजनम्। 'स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यत' इत्यमरः। भट्टिरिति। पदन्यासे स्तम्बघ्नत्वं तत्रापि लक्षणयैवेत्याशयः। इष्टमिति। कापेः सर्वापवादत्वात्, 'कृत्यल्युटो बहुलमि'ति वचनाद् वेदं सिध्यतीति हरदत्ताचार्यः। अन्ये 'करणाधिकरणयोश्चे'ति ल्युटा स्तम्बहननीत्यपि वाञ्छन्ति॥ अतो लोप इति। घशब्दाकारस्य। बाहुलकादिति। भानुजिस्त्वमरव्याख्यायाम् 'अन्यत्रापी'ति डे न्यङ्क्वादित्वात् कुत्वे प्रतिघशब्दं व्युत्पादयति। 'प्रतिघौ रुट्प्रतीघाताविति' हैमः॥ आश्रय इति। 'मङ्गलोपघ्नमञ्जुला' इति मदीये चित्रोदयमणौ॥ सङ्घोद्घाविति। 'सङ्घेन तापसोद्घानामि'ति सुभद्राहरणे। तापसश्रेष्ठानामित्यर्थः॥ निमितमिति। निपूर्वो माधातुः तुल्यतायाम् निमिमीते निपश्यति सदृशं चिन्तयतीत्यर्थः। सर्वतः समो निमितः। तदाह— समारोहपरिणाहमिति। 'तत्र विष्वक्समे निघ' इत्यमरः। भाव इति।

---

१ 'ति भ' ग. पाठः.

**त्रेर्मम्नित्यम् (४. ४. २०)**

क्त्र्यन्तात् तेन निर्वृत्तमित्यर्थे तद्धितो मप् स्यात् । नित्योक्ते-र्मपा सहैव क्त्र्यन्तस्य प्रयोगः । करणेन निर्वृत्तं कृत्रिमम् । एवं डुक्रीञ्, क्रीत्रिमम् ॥

**ट्वितोऽथुच् (३. ३. ८९)**

ट्वितो धातोर्भावेऽथुच् स्यात् । टुवेपृ, वेपथुः ॥

**यजयाचयतविच्छप्रच्छरक्षो नङ् (३. ३. ९०)**

एभ्यो भावे नङ् स्यात् । चुत्वम् । यज्ञः । याच्ञा । स्वभावात् स्त्रीत्वम् । यत्नः । 'च्छ्वोः शूट्—' (६-४-१९) इति च्छस्य शः । ङित्त्वादगुणः । विश्नो गमनम् । प्रश्नः । ष्टुत्वम् । रक्ष्णः । तृषेश्च वाच्यम् । तृष्णा । स्त्रीत्वं प्राग्वत् । 'प्रश्ने चासन्नकाले' (३-२-११७) इति निपातनादिह प्रच्छेर्ग्रहिज्यादिना प्रसारणं न ॥

**स्वपो नन् (३. ३. ९१)**

स्वप्नः ॥

**उपसर्गे घोः किः (३. ३. ९२)**

---

'भावे अकर्तरि च कारक' इति वर्तत इति वृत्तिः । अथापि भाव इत्येवाधिक्रियते सम्भवात् । तेन निर्वृत्तमित्यर्थे विधीयमानेन मपा सहा-न्वयौचित्यादिह भाव एव सम्भवी । क्रियया हि कारकाणामन्वयविचारः ।

> "पवित्रैर्मैर्देवतादीनामतिथीनां च पूजकम् ।
> विद्ययानन्दथुं प्राप्तं परनिर्दयवेपथुम् ॥"

इति सुभद्राहरणे ॥ एभ्यो भाव इति । 'भावेऽकर्तरि च कारक' इति वर्तत इति काशिका । तत्राकर्तरीत्यस्य भगवति हरौ 'यज्ञ' इति सहस्रनामपाठे कर्म-साधनतया व्युत्पत्त्यादिः फलम् । स्वभावात् स्त्रीत्वमिति । नङन्ताः सर्वे पुंलिङ्गाः । याचिस्तु स्त्रीलिङ्गः । वासरूपविधिश्च यथाभिधानं भवतीति हर-दत्तः । प्राग्वत् । याचिवदिति यावत् । निपातनादिति । 'यजादिभ्यो नस्य ङित्त्वे सम्प्रसारणप्रतिषेधो वक्तव्य' इति वार्तिकं चात एव निपातनात्

---

१. 'विश्न' क. ख. पाठः.

प्रादौ पूर्वे दाधाधातूनां भावादौ किः स्यात् । कित्वादाल्लोपः । आङ्येव द इति भोजः । आदिः । आधिः । विधिः । निधिरित्यादि । विधिर्ब्रह्मेत्यत्र बाहुलकात् कर्तरि किः ॥

## कर्मण्यधिकरणे च (३. ३. ९३)

कर्मपूर्वाद्धोरधिकरणे किः स्यात् । शरो धीयतेऽस्मिन्निति शरधिः । शिरोधिः । जलधिः । घञादयः पुल्लिङ्गाः । नाम्नि तु पुंस्त्वं प्रायिकम् । मल्यते धार्यत इति घञ् । माला । स्वेनाभिप्रायेणेरः स्वैरः । ईरेर्घञ् । 'भीवृषादेः क्लीबेऽञ् वाच्यः' (वा० ३-३-५६) । भयम् । वर्षम् । पदम् । वर्षोऽस्त्रीति दर्शनाद् घञपि ॥

## कर्म॰व्यतिहारे णच् स्त्रियाम् (३. ३. ४३)

क्रियाव्यत्यासे वाच्ये स्त्रीलिङ्गे णच् स्यात् । णित्वाद् वृद्धिः । व्यत्यासद्योतनायोपसर्गयोगः । व्यवहासी ॥

## णचः स्त्रियामञ् (५. ४. १४)

णजन्तात् स्त्रियां स्वार्थे तद्धितोऽञ् स्यात् ॥

खण्डितं भाष्ये ॥ नन्विति । निस्स्वरसम्पादनार्थोऽयं पृथक् पाठः ॥ **भावादाविति** । आदिना अकर्तृ कर्मादिः सङ्गृह्यते । तेनोपाधीयमाने कर्मणि उपाधिरिति सिद्धम् । भोज इति । 'आङि दः किः' इति तदीयं सूत्रम् । भट्टपादवचनमर्थानुवादेन । निधिरिति । अधिकरणेऽत्र किः ॥ **अधिकरणे चेति** । अधिकरणग्रहणं भावस्य कर्मादेश्चार्थान्तरस्य निरासाय । चस्तु प्रत्ययानुषङ्गार्थः । कर्मणीत्युपपदं व्याख्यानान्नाधिकारः । **घञादयः पुल्लिङ्गा इति** । लिङ्गानुशासने पुमानित्यधिकृत्य 'घञबन्तः' इत्यादीनि पाणिनीयसूत्राणि । प्रायिकमिति । संज्ञाप्रमाणत्वान्नियतलिङ्गेष्विति यावत् । **पदमिति** । भीवृषादेरित्यादिग्राह्यमिदम् ॥ भावेऽर्थे लिङ्गविशेषमर्थविशेषोपाधिसम्पन्नं प्रदर्शयितुमवतारयति — कर्म॰व्यतिहारे णच् स्त्रियामिति । धातोः स्ववाच्यक्रियायाः परस्परकृते व्यत्यासे वाच्ये इत्यर्थस्तदाह—**व्यत्यासे इति** । स्त्रियामिति किम् । व्यतिपाके घञः पुंसि विधानादिति यावत् । कर्म॰व्यति-

१. 'कर्मव्य' ग. पाठः.

**यस्येति च (६. ४. १४८)**

यकारादावजादौ च तद्धिते ईकारे च परे इवर्णावर्णयोर्लोपः स्यात्। इति णजकारलोपः॥

**तद्धितेष्वचामादेः (७. २. ११७)**

ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात्। व्याव-हास। 'टिड्ढाणञ्—' (४-१-१५) इति ङीप्। ईतिपरेऽतो लोपः। व्याव-हासी परस्परहसनम्। एवं व्यात्युक्षी। व्यतीक्षा व्यतीहेत्यादौ णञ् नेष्टः॥

**अभिविधौ भाव इनुण् (३. ३. ४४)**

अभिविधिः सर्वतो व्याप्तिः। तस्मिन् द्योत्ये धातोर्भाव इनुण् स्यात्। णित्त्वाद् वृद्धिः। [illegible]। संराविन्॥

**अणिनुणः (५. ४. १५)**

इनुणन्तात् तद्धितोऽण् स्यात्। [illegible]। सांराविणं सर्वव्यापी रवः। इनुणन्तं क्लीबमेव॥

---

हारे स्त्रीग्रहणं व्यतिपाकार्थमिति भाष्यम्। [illegible] व्यतिहारस्य द्योतनं व्यतिभ्यामित्याह व्यत्यासेत्यादिना॥ यस्येत्यधिकारलब्धमर्थं फलमुखेन विवृणोति — यकारादावजादौ च तद्धिते इति। 'मृजेर्वृद्धिरि'त्यतो वृद्धिः 'अचो ञ्णिती'ति चानुवर्तते। तदाह — ञिति णिति चेत्यादि। व्यावहा-सीति। व्यतीत्य पुंनपुंलक्षणं येन येनोपसर्गेणाभिधानं व्यत्यासस्य प्रयोगोपाधि-स्तस्य तस्योपसर्गस्य समभिव्याहार इष्ट इति यावत्। व्यात्युक्षी परस्परमुक्षणम्।

"व्यात्युक्षीमभिसरणग्लहामदीव्यन्"

इति माघः। स्त्रियामिति किम्। व्यतिपाकः इत्यादौ मा भूत्। सत्यपि कर्मव्यतीहारे व्यतीक्षा व्यतीहेत्यादौ तु 'कृत्यल्युटो बहुलमि'ति नायं णच् किन्तु 'गुरोश्च हल' इति अप्रत्यय एव। अतष्टाप्। तदाह — नेष्ट इति। भोजस्तु क्रियाव्यतीहारेऽनीहीक्ष्यादिभ्यो णजिति सूत्रयन्नमुमर्थं पर्युदासेनैव साधयति॥ अभिविधौ भाव इति। भाव इति वर्तमाने पुनर्भावग्रहणं वास-रूपनिरासार्थं तेन घञ् न भवतीति काशिका। ल्युट् तु बाहुलको भवत्येव।

---

१. 'रे अलो' क. ख. पाठः.

## स्त्रियां क्तिन् (३. ३. ९४)

धातोर्भावाद्यर्थेषु स्त्रीलिङ्गे क्तिन् स्यात्। कित्त्वादगुणः। कृतिः। हृतिः। सेटामपि 'तितुत्र—'(७ २·९) इत्यनिट्त्वम्। भूतिः। वृष्टिः। 'ग्रहस्निहकुचपठवदभणदीधीमेधादिभ्यः क्तेरिडि'ति भोजः। 'ग्रहोऽलिटि—'(७·२·३७)इति दीर्घः। प्रसारणम्। गृहीतिः। स्निहितिः। निकुञ्चनं निकुचितिः। पठितिः। यजादित्वादुत्वम्। उदितिः। भणितिः। दीधी दीप्त्यर्थः। दीधी इ ति॥

## यीवर्णयोर्दीधीवेव्योः(७. ४. ५३)

यकारस्य इकार उक्त्यर्थः। यकार इवर्णे च परे दीधीवेव्योरन्त्यलोपः स्यात्। दीधितिः। 'मेधृ सङ्गमे' मेधितिः। 'ह्रादो निष्ठायाम्' (६ ४-९५) इत्यत्र ह्लाद इति विभागात् क्तिन्यपि ह्रस्वः। आह्लत्तिः। 'ति च' (७-४-८९) इति चरफलोरुत्वम्। 'हलि च'(८ २-७७) इति दीर्घः चूर्तिः। प्रफुल्तिः। 'श्रुयजीषिस्तुभ्यः करणे क्तिन् वाच्यः' (वा० ३·३-९५)। श्रूयतेऽनयेति श्रुतिः। किच्त्वात् प्रसारणम्। व्रश्चादिषः। इष्टिर्देवपूजासाधनम्। एवं स्तुतिः। 'ॠदन्ताल्ल्वादेश्च क्तिनो निष्ठावन्नत्वं वाच्यम्' (वा० ८ २-४४)। कीर्णिः। गीर्णिः। लूनिः। 'ग्लाम्लाज्याहाभ्यो निर्वाच्यः' (वा० ३-३-९५)। ग्लानिरित्यादि। 'सम्पदादिभ्यः क्विब्वा वाच्यः' (वा० ३-३-१०८)। समादिषु पदिसदिविदिशासिश्रुस्नुनहिवृतिवृषिप्रुषियतीण्प्रभृतिभ्यः क्विप्। पदः सम्पत्। विपत्। क्विब्वा वाच्य इत्युक्तेः सम्पत्तिरित्याद्यपि। संसत्। संवित्। शास इत्। आशिस्। पदत्वे रुत्वदीर्घौ। आशीः। प्रतिश्रुत् प्रतिध्वनिः। परिस्नुत्। उपनह्॥

---

साङ्कुटनमिति बाहुलकाधिकाराद् युजपि भवतीति दण्डनाथः। क्लीबमेवेति। क्तल्युटोः समानयोगक्षेमत्वात्, प्रयोगोपाधेरपि॥ भावाद्यर्थेष्विति। आदिना अकर्तृकारकं सङ्गृह्यते। कृतिरिति। कालिदासस्य कृती रघुवंशादिरिति कर्मणि॥ श्रुयजीषिस्तुभ्य इति। श्रुयजीषिस्तुभ्यः करण इति भाष्यवार्त्तिकम्। साधनमिति। करणत्वं सूचयितुमिदं विवरणम्। निष्ठावदिति। 'रदाभ्यामि'ति

**नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ (६. ३. ११६)**

क्विबन्तेषु नहादिषु परेषु पूर्वस्याणो दीर्घः स्यात् । पदत्वे नहो धः । उपनह्यत इत्युपानत् । नीवृत् । प्रावृष् । पदत्वे षस्य जश्त्वचर्त्वे । प्रावृट् । विग्रुट् । संयत्[1] । इणः तुक् । समित् । द्वे युद्धाख्ये । प्रभृत्युक्तेः समिध्यतेऽनयेति समित् । क्रुधियुधिक्षुधितृषित्विषिरुषिराजिरुचिशुचिक्षुदिमृदिगृत्रादिभ्यश्च । क्रुत् क्रोधः । युत् युद्धम् । क्षुत् । तृट् । त्विट् । रुट् । रुग् रोगः । रुक् शोभा । शुक् । मुत् । मृत् । ऋत इत् । गिर् । पदत्वे गीः । त्राणमेव त्राः । ह्रीभीलूभूकृञ्भिदिच्छिदिनुदिदृशिनशियुजिज्वरत्वरात्रस्त्रिवुमवादिभ्यश्च । ह्रीः । भीः लूः । भूः । करणं कृत् । भित् । छित् । नुत् दृश् । पदत्वे 'त्यदादिषु दृशः —' (३-२-६०) इति क्विन्प्रत्ययत्वात् 'क्विन्प्रत्ययस्य कुः' (८-२-६२) इति कुत्वम् । दृक् । छशां षः । नट् । योगो युक् । ज्वरादे-

---

सूत्रविहितं नत्वमिति यावत् । नत्वमिति । काशिकायां 'निष्ठावद् भवतीति वक्तव्यमि'ति निष्ठावद्भाव एवोक्तः' इह रिति तत्फलमपि नत्वं मुक्तकण्ठमुक्तमिति विशेषः । वाच्य इत्युक्तेरिति । स्वाभाविकस्तु क्तिन् सिद्ध एवेति भावादिति यावत् । प्रतिध्वनिरिति । प्रतिश्रुतार्थकथनमिदम् ॥

"लोकोत्तराभिरापन्नः कृतिभिः कीर्तिमुत्तमाम् ।"

इति सुभद्राहरणे ॥ 'ढ्लोपे पूर्वस्य दीर्घोऽण' इत्यतः पूर्वस्येत्यादेरनुवृत्तिं मनसिकृत्याह — पूर्वस्याणो दीर्घः स्यादिति । समिदिति । 'ह्रस्वस्ये'ति तुक् । प्रभृत्युक्तेरिति । सम्पदादिभ्य इति वचनगतादिशब्दार्थरूपेणेति यावत् । सामिध्यत इति । इन्धे रूपमिदम् । यकि किच्वान्नलोपः । सन्दीप्यत इति भावः । क्रुधियुधिक्षुधितृषित्विषिरुचिरुषिशुचिमुदिमृदिगृत्रादिभ्यश्च । क्विबिति शेषः । *त्यदादिषु दृश इति क्विनिति । 'त्यदादिषु दृशोऽनालोचने कञ्चे'ति चसमुच्चितः स क्विन् । क्विन्प्रत्ययान्तस्य विधी-

---

1. 'त् । तु' क. ख. पाठः.

---

* नन्वत्र तृधातुर्गृह्यते । ऋदन्तसाहचर्यादिति केरलवर्मदेवः । तत्पक्षे रक्षणार्थस्य न ।

रूठ्। जूः । तूः । ऊः । स्त्रूः । मूः । वेत्युक्तेः हीतिर्भीतिरित्यादि । आद्युक्तेरूर्जेरूर्क्। ऋच्यतेऽनयेति ऋक् । आकृतिगणत्वात् सर्वधातुभ्य इत्यन्ये ॥

स्थागापापचो भावे (३. ३. ९५)

एभ्यो भाव एव क्तिन् स्यात् । कित्त्वाद् 'द्यतिस्यति —' (७-४-४०) इतीत्वम् । उपस्थितिः । 'घुमास्था —' (६-४-६६) इतीत्वम् । सङ्गीतिः । प्रपीतिः । पक्तिः ॥

ऊतियूतिजूतिसातिहेतिकीर्तयश्च (३. ३. ९७)

एते क्तिन्यन्तोदात्ता निपात्यन्ते । ऊती रक्षा । यूतिर्मिश्रणम् । युतिस्तु 'युङ् बन्धन' इत्यत एव । जूतिर्वेगः । सातिरवसानं दानं वा । 'कीर्तिज्ञप्तयश्चे'ति भोजः* ॥

यमानं कुत्वम् 'अलोऽन्त्यस्ये'ति शस्य भवतीत्युदाहरति — दृगिति । छशामिति । त्रश्चेति सूत्रघटकेत्यादिः । नडिति । नशेः पत्वे जश्त्वे चेदम् । इत्यादीति । क्तिन्नन्तमपि रूपमिति शेषः । आकृतिगणत्वादिति । तेन जुट् मुट् पुट् इत्यादि सिद्धम् ।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥"

भाव एवेति । पुनर्भावग्रहणादयं नियमः । 'भावग्रहणमर्थान्तरनिरासार्थमि'ति काशिका । क्तिनिति । अङोऽपवादस्य बाधकः । अवस्था संस्थेत्यादि तु 'व्यवस्थायामसंज्ञायामि'ति ज्ञापनाद् बोध्यम् । कित्त्वादिति । तादीत्यादि ।

"स्थितिज्ञं सर्वशास्त्राणां सामोद्गीतिविशारदम् ।
सोमपीतिपवित्रास्यं वपापक्तिविचक्षणम् ॥"

इति सुभद्राहरणे ॥ अन्तोदात्ता इति । पूर्वसूत्रादुदात्त इत्यनुवर्तते । रक्षेति । 'अव रक्षण' इत्यस्य क्तिन्यूठादम् । यूतिर्मिश्रणमिति । 'यु मिश्रणामिश्रणयो'रित्यस्य । दीर्घो निपातनात् । तथा जवतेर्जूतिः । सातिरिति । द्यतिस्यतीतीत्वाभावो निपातनात् । दानं वेति । सनोतेर्दानार्थस्यापि जन-

* ज्ञप्तिशब्दमपि सूत्रे योजितवानित्यर्थ इति केरलवर्मदेवः ।

**व्रजयजोर्भावे क्यप् (३. ३. ९८)**

व्रज्य । स्त्रीत्वाट्टाप् व्रज्या । यजेः किति प्रसारणम् । इज्या ॥

**संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः (३. ३. ९९)**

एभ्यो नाम्नि भावादौ क्यप् स्यात् । क्यप्यजेर्वीत्वं न । समज्या परिषत्[1] । बाहुलकात् समस्या संक्षेपः । निषद्या विपणिः । निपत्या । मन्या ग्रीवापृष्ठसिरा । विद्या । पित्त्वात् । तुक् । सुत्या ॥

**अयङ् यि क्ङिति (७. ४. २२)**

यादौ क्ङिति प्रत्यये परे शीङोऽयङ् स्यात् । ङित्वादन्त्यस्य । शय्या । भृञो भाव एव क्यप् । भृत्या दासभरणम् । बाहुलकात् भृतिरपि ।

---

सनखनामि'त्यात्वे समानं सातिरूपमिति मत्वेदम् । सनोतेः स्यतेर्वा सातिरिति दण्डनाथः । भोज इति । 'ऊतियूतिजूतिसातिहेतिज्ञप्तिकीर्तयश्चे'ति तत्सूत्रम् । ज्ञापयतेर्ज्ञप्तिः, कीर्तयतेः कीर्त्तिरिति तद्वृत्तौ दण्डनाथः ।

"कीर्त्तिं विज्ञप्तिमधुरं गायन्ति स्वर्गयोषितः ।"

(प्रशस्तिः) ॥

क्यबिति । पित्त्वमुत्तरत्र षुभृकृप्रभृतीनां तुगर्थम् ।.

"इज्यापरं कृतप्रश्नः स ववन्दे महामतिम् ।"

इति सुभद्राहरणम् ॥ नाम्नीति । संज्ञायामित्यस्यार्थतो विवरणमिदम् । वीत्वं नेति । 'अजेः क्यपि वीभावो नेति वाच्यम्' इति वचनात् । परिषदिति । 'समज्यापरिषद्गोष्ठीसभासमितिसंसदः' इत्यमरः । समस्येति । सम्पूर्वादस्तेरस्यतेर्वा रूपमिदं क्यपि । आदौ भ्वादेशाभावोऽपि बाहुलकात् साध्यः । 'समस्या तु समासार्था' इति वृत्तिः । समासः सङ्कोच इति यावत् । मन्येति । तस्यार्थविवरणं ग्रीवेत्यादि । पित्त्वादिति । 'ह्रस्वस्य पिति कृति तुगि'ति शेषः । सुत्या अभिषवः ॥ अयङ् यीति । 'शीङः सार्वधातुक' इत्यतः शीङ इत्यनुवर्तते । तदाह — शीङोऽयङ् इति । अयङि ङित्वमनेकाल्त्वेऽप्यन्त्यादेशार्थम् । शय्येति ।

---

१. 'ज्या । बाहुलकाद् समस्या संक्षेपः । य', २. 'द् । नि' ग. पाठः.

एवं यत्रापवादेषु सङ्करो दृश्यते क्तिनः।
तत् सर्वं बहुलोक्त्यैव साधितं माधवादिभिः ॥

इण्, इत्या गतिः। अटिचरोश्च भोजः। अत्या चर्या च गतिः ॥

कृञः श च (३. ३. १००)

कृञो भावादौ शः क्यप् च स्यात्। शः सार्वधातुकत्वार्थः। कृ अ ॥

सार्वधातुके यक् (३. १. ६७)

भावकर्मार्थे सार्वधातुके परे धातोर्यक्प्रत्ययः स्यात्। इति शस्य भावार्थत्वाद् यक्। कृ य अ ॥

रिङ् शयग्लिङ्क्षु (७. ४. २८)

शे यकि यादावसार्वधातुके लिङि च परे ऋदन्तस्य रिङादेशः स्यात्। अत्र यकि रिङ्। ङित्त्वादन्त्यस्य। क्रि य अ। अतो गुणे। क्रिया। क्यपि तुक्। कृत्या। क्तिन्नपीष्टः। कृतिः ॥

---

"शय्या भूमितलं गृहाश्च विहिता भूमीरुहो बान्धवाः"

इति विरक्तसूक्तिः। भाव एवेति। 'भृञो वे'ति भोजसूत्रमुपादाय बाहुलकाद् भाव एव क्यबिति दण्डनाथवचनमवलम्ब्येदम्। तेन कर्मणि भार्येत्येव। बाहुलकाद् भृतिरिति। कर्मणि भृताविति निर्देशोऽप्यत्र बाहुलकत्वाङ्गीकारे बीजम्। इदं भोजस्य वावचनतः सिद्धम्।

नयो भृत्या कापि क्वचन विनयोऽप्येवमभितः
समं क्रीत्या भृत्या दधति विजयं क्षोणिपमणेः।

इति नीतिः। बाहुलकाद् भृतिरित्युक्तमुपादायान्यत्रापि सञ्चारयितुकामः कारिकया साधारणीकरणमाह — एवमिति। तत्सर्वमिति। भृतिः भृत्या व्यवस्थितिः व्यवस्थेत्यादि ॥ कृत्येति।

'धर्म्या विदधतं कृत्याः सत्यरक्षापरश्रियम्।'

इति सुभद्राहरणे।

इच्छा (३. ३. १०१)

असौ शान्तो निपात्यः । बाहुलकादिष्टिः ।

बाहुलकादाह्वयतेः शः पुंस्त्वं चेति भाषते स्वामी ॥

शित्त्वादात्त्वाभावः अपि सति पररूपमाह्वयो नाम ।

परिचर्यापरिसर्यामृगयाटाट्याश्च शान्ता इष्यन्ते । अटाट्या परिसर्या च गतिरेव । जागर्तेरकारः श च वाच्यः । शे प्राग्वद् यकि 'जाग्रोऽवि—' (७-३-८५) इति गुणे जागर्या । गुणात् परत्वाद् रिङ्वेति केचिदिति टीकासर्वस्वे । जाग्रिया । अकारे तु जागरा । घञि 'जाग्रोऽवि—'(७-३-८५) इति गुणे जागरोऽपि ॥

अ प्रत्ययात् (३. ३. १०२)

प्रत्ययान्तधातुभ्योऽप्रत्ययः* स्यात् । सन्यङाद्यन्ताश्च ते । बुभूष अ । अतो लोपः । बुभूष । टाप् । बुभूषा । लोलूया । पापच्य आ । 'यस्य हलः (६-४-४९) इति यलोपः । पापचा । अटाटा । 'न धातुलोप—' (१-१ ४) इत्यगुणे रोरुधा ॥

---

इष्ट इति । बाहुलकादिति शेषः ॥ इष्टिरिति । इष्ट्युपसङ्ख्यानवतीत्युपाध्यायाः । द्विपर्यन्तानामेवेष्टिरिति दीक्षितचरणाः । शित्त्वादिति । आदेच उपदेशेऽशिति पर्युदासादिति भावः । पररूपमिति । शबकारशाकारयोः पररूपम् । नामेति । नाम संज्ञेत्यर्थः ॥ इष्यन्त इति । 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानमि'ति वार्त्तिकाद् शे यकि च सिद्धमिदं मन्यते । भोजस्तु 'अटाट्याद् वे'ति विकल्पयन् अटाटामपि मन्यते । अकारः श च वाच्य इति । 'जागर्तेरकारो वे'ति वार्तिकस्य रूपान्तरमिदं छायागतम् । अकारविकल्पेन पक्षे फलितं शमिह समुच्चिनोतीति विशेषः । प्राग्वदिति । 'सार्वधातुके यगि'त्यनेनेति शेषः । जाग्रियेति । रिङि तु शस्य ङित्त्वाद् । रिङन्तस्य गुणो न शक्य इतीयङेवेति यावत् । जागरेति । स्त्रीत्वादप्रत्ययस्य । जागर इति । घञः पुंसि शासनाद् रूढा यौगिकाश्च द्वये ॥ प्रत्ययान्तधातुभ्य इति । धातवः तत्र सनाद्यन्ता इति फलितोऽर्थः । तदाह — सन्यङाद्यन्ताश्च ते इति । चिकीर्षा-पुत्रीया-पुत्रकाम्या-बोभूया-कण्डूयादीन्युदाहरणानि ॥

---

१. 'स्यनिच्छयाह माधव इति टी', १. 'यङो लो' ग. पाठः.

---

* अकारप्रत्यय इति [illegible] ।।

गुरोश्च हलः (३. ३. १०३)

हलन्ताद् गुरुमतो धातोः अः स्यात् । स्पर्धा । ईक्षा । स्त्रीत्वाविवक्षया घञपीति वामनाद्याः । बाधा बाधः । ऊहा ऊहः । आबादिभ्यो निष्ठायामनिड्भ्यः क्तिन् वाच्यः । आप्तिः । दीप्तिः । पूरी, पूर्तिः । शास इत् । शिष्टिः । नलोपः । स्रस्तिः । ध्वस्तिः । प्रशस्तिः । 'प्रशंसावचनैश्च'(२-१-६६) इत्युक्तेः प्रशंसापि । 'चायेः क्तिनि नित्यं चिभावो वाच्यः' । अपचितिः । एते व्याप्तो दीप्त इति निष्ठायामनिट एव । राजभ्राजोस्तु बाहुलकात् क्तिनि व्रश्चादिषः । राष्टिः । भ्राष्टिः ॥

षिद्भिदादिभ्योऽङ् (३. ३. १०४)

षिद्भ्यो धातुभ्यो भिदादिभ्यश्चाङ् स्यात् । त्रपूष्, त्रपा । लभष्, लभा । जॄष् ॥

ऋदृशोऽङि गुणः (७. ४. १६)

ऋवर्णान्ताद् दृशेश्चाङि परे गुणः स्यात् । जरा । लब्धिर्जीर्णिश्च बाहुलकात् । घटादयः षितः ।

घटा व्यथा प्रथा तद्वत् त्वराथो मर्दनं म्रदा ।
स्खदा विदारो विस्तारः प्रसा स्यात् कदनं कदा ।

---

गुरोरिति । गुरुत्वं दीर्घस्य, संयोगे ह्रस्वस्य चेति द्विविधमुदाहरणमिह सम्भवि । तदाह — स्पर्धेत्यादि । वामनाद्या इति । इत्थमाह वामनः—

"अविधौ गुरोः स्त्रियां बहुलं विवक्षा"

क्तिन् वाच्य इति । 'गुरोश्च हल' इत्यप्रत्यये प्राप्ते तन्निषेधायेदं वचनम् । भोजोऽपीमं निषेधं 'न राध्भ्राज्यापिदीपिचायिस्रंसिध्वंस्यादेर्निष्ठायामनिट' इति सूत्रेण साधयति । अनिट इति किम् । भिक्षा शिक्षेत्यादौ निषेधो मा भूत् । अनिट इति पर्युदासस्य सङ्कोचं कञ्चिदभीप्सितं साधयितुमाह —राजभ्राजोस्त्वित्यादिना ॥ अङ् स्यादिति । ङित्त्वमासङ्क्तुमयं विशिष्य विधिः । 'ऋदृशोऽङी'त्याविविहितकार्यसम्पत्तये द्रष्टव्यः ॥ षित इति । तेन स्त्रियामङ् भवति । तदाह— घटेत्यादि । विदार इति । 'स्खद स्खदन' इति घटादेर्धातोराङि अर्थविवरणम् । तथा 'प्रस विस्तार' इत्यस्य विस्तार इति च । तथा वैक्लव्यार्थस्य

भिदादिस्तु भिदिच्छिदिविदिदयिरुजिमृजिक्षिपिचुरिप्रच्छि-भ्योऽसंज्ञायाम् । ङित्त्वादगुणः । भिदा । छिदा । विदा । दया । रुजा । मृजा । क्षिपा । चुरा । ङित्त्वात् प्रसारणम् । पृच्छा । असंज्ञाया-मित्युक्तेर्नाम्नि क्तिनेव । भित्तिः कुड्यम् । विच्छित्तिः अलङ्कारः । गुहितुलिवसिवपिक्षपिक्षिभ्यः संज्ञायाम् । गुहा । तुला । वसा । वपा । क्षपा । इयङ् । क्षिया । चोरितुल्योश्चुरादिणिजनित्यत्वात् । रिखिलिखिशुभिसिधिमिधिगुधिभ्यो गुणश्च । रेखा । लेखा । शोभा । सेधा सत्त्वम् । मेधा । गोधा । ऋकृहृधृतॄभ्यो वृद्धिश्च । आरा प्रतोद-श्चर्मसीवनसूचिर्वा । कारा बन्धगृहम् । हारा मानम् । हरणमिति वामनः । मुक्ताहार इत्यन्ये । धारा । तारा नक्षत्रम् । 'तारा तु नृस्त्रियोरि'ति केशवोक्तेः पुंस्यपि । क्लीबे तु चिन्त्यम् * । 'कृपेः संप्रसा-रणं च' (गण० ३-३-१०४) । कृपा । चुदेर्डो दीर्घश्चेति रामः । चूडा । 'जट सङ्घाते' इत्यस्य भिदाद्यङि जटेति स्वामी । तथा विस्रंसेरङि नलोपे विस्रसा जरा इति ॥

## चिन्तिपूजिकथिकुम्बिचर्चश्च (३. ३. १०५)

एभ्योऽङ् स्यात् । णिलोपः । चिन्ता । अत्र णिलोपाभावादि-यङि चिन्तियेत्यपि माधवः । पूजा । कथा । 'कुबि छादने' । कुम्बा । चर्चा । चकारात् भीषिस्पृहिदोल्यादेश्च । भीषा । स्पृहा । दोला प्रेङ्खः ॥

---

कदतेः कदनमिति च । भिदीत्यादि । एतद् भोजीयसूत्रानुवादः । असंज्ञाया-मिति । तथाच भोजः 'षितोऽङ्' इति पृथक् सूत्रं पठित्वा 'भिदिच्छिदिविदिदयि-रुजिमृजिक्षिपिचुरिप्रच्छिभ्योऽसंज्ञायामि'त्येव सूत्रं करोति । गुहीत्यादि । इदमपि भोजीयस्यैवानुवादः । अनित्यत्वादिति । नुमर्थं चितेरिदित्करणं तत्र ज्ञापकं बो-ध्यम् । चुरातुलेति सिद्धिः फलम् । रिखीत्यादि । इदमपि भोजीयानुवादः । अङो ङित्त्वात् तत्प्रयुक्तं निषेधं बाधित्वा प्रतिप्रसवोऽयम् । ऋकृहृधृतॄभ्यो वृद्धिश्च । अयमपि भोजीयानुवादः । अत्र वृद्धेः प्रतिप्रसवश्च पूर्ववत् । आरेत्यस्यार्थकथनं सूचिर्वेत्यन्तम् । आरा शस्त्र्यामिति काशिका ॥ माधव इति । 'अकारे विधात-व्येऽङो विधानं गुणाभावार्थम् । तत्सामर्थ्यात् कदाचिण्णिलोपो नास्तीति तत्र चिन्तियेतीयङुदाहर्तव्य' इति तद्ग्रन्थः । 'अत्र मैत्रेय' इत्युपक्रम्य वचनादिदं न स्वमतमित्यपि ध्वनितम् । चकाराद् भीषीत्यादि । इदं भोजेन 'भूषिभीषि-

---

* 'नक्षत्रमृक्षं भं तारम्' इत्यमरोक्तेः क्लीबेऽपीति केरळवर्मदेवः ।

## आतश्चोपसर्गे (१. ३. १०६)

सोपसर्गादादन्तादङ् स्यात्। ङित्त्वादाल्लोपे प्रम। टाप्। प्रमा। उपमा। प्रभा। भामेरनुपसर्गेऽपि दृश्यते। भा। मा। भांशब्दः सम्पदादिक्किपीति माधवः। श्रत् दधाताविति श्रदो धाञ्युपसर्गतामाह भोजः। श्रद्धा॥

अन्तर्णत्वाङ्किविधिषु प्राप्नोति ह्युपसर्गताम्।
अङन्तर्धा किरन्तर्धिर्णत्वेऽन्तर्णयतीत्यपि॥

## ण्यासश्रन्थो युच् (१. ३. १०७)

ण्यन्तादासश्रन्थिभ्यां च भावादौ स्त्रियां युच् स्यात्। योरनः। कारि अन। णिलोपः। णत्वम्। कारणा। हारणा। पीडना। पीडा भिदादिः। शासना। पाचना। याचना। बाहुलकाच्छास्यादेः क्तिनपीति माधवः। णेरनिटि शास्तिः। पाक्तिः। प्रभादिपः। याष्टिः। चिन्त्यादेर्युजपीष्टः। चिन्तना पूजनेत्यादि। आसश्रन्थ्योः आसना श्रन्थना।

---

चिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यश्चे'ति सूत्ररूपेण घटितं द्रष्टव्यम्। चकाराद् युजपि भवतीति चिन्तना इति काशिका। युच् 'ण्यासश्रन्थे'ति बोध्यम्। परन्त्वयमाशयः पदमञ्जर्यां न सम्मतः॥ टाबिति। लोपेऽदन्तत्वादजायत इति भावः। नचाजादेशस्य स्थानिवत्त्वं शङ्क्यम्। पूर्वविधेरभावात्। मा लक्ष्मीः। श्रदो धाञ्युपसर्गतामिति। 'श्रदन्तरोरुपसर्गवद्वृत्तिरि'ति काशिका। अन्तर उपसर्गत्वं फलमुखेन दर्शयन् कारिकया संक्षिपति— अन्तर्णत्वेत्यादि। चिन्त्यादेरङन्तस्य कतिपयान्युदाहरणानि सुभद्राहरणाद्—

''चिन्ताभिः कार्यजातानां पूजाभिर्बहुजन्मनाम्।
कथाभिरादिराजानां कालं नयथ कञ्चन॥
वर्णाश्रमाश्रयाशेषधर्मस्थापनया यशः।
बहुवित्तप्रदाभिश्च कम्भवे कश्चिदुज्ज्वलम्॥''

ण्यासश्रन्थो युजिति। इह श्रन्थिः 'श्रन्थ विमोचनप्रतिहर्षयोरि'ति क्र्यादिरेव गृह्यते। अन्यस्य चुरादिण्यन्तत्वेव सिद्धेरिति काशिका। इह भाष्ये त्रीणि

---

१. 'पाति' इ' ग. पाठः. २. 'भाश…ब्दः' क. पाठः ३. 'नि' क, 'पि' ख. पाठः.

बाहुलकादुपासितः । आस्येति ण्यदन्तम् । 'घट्टिवन्दिविदिभ्यश्च युज्वाच्यः'(वा० ३. ३. १०७)। घट्टना। वन्दना । वन्दना । वेत्तेर्वेदना। 'इषेरनिच्छार्थस्य'(वा० ३. ३. १०७) अन्वेषणा। एषणा। द्वौ समार्थौ । 'परेर्वा' (वा० ३. ३. १०७) पर्येषणा । परीष्टिः । अधिपर्यायेति भोजः । अध्येषणा । अधीष्टिः ॥

## रोगाख्यायां ण्वुल् बहुलम् (३. ३. १०८.)

रोगनाम्नि स्त्रियां भावे बहुलं ण्वुल् स्यात् । वोऽकः । टाप् । प्रच्छर्दका ॥

## प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः (७. ३. ४४.)

असुब्व्यवहिते अपि परे प्रत्ययस्थात् ककारात् पूर्वस्यात इत् स्यात् । प्रच्छर्दिका । एवं प्रवाहिका । ग्रहणी । बहुलोक्तेः क्वचित् स्त्रीत्वं न । अरोचकोऽरुचिव्याधिः । 'धात्वर्थमात्रे ण्वुल् वाच्यः'(वा० ३. ३. १०८)। आसिका । शायिका ॥

---

वार्तिकानि --- युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानं कर्तव्यम् । १ । इषेरनिच्छार्थस्य । २ । परेर्वा । ३ । इति च । न च सिद्धं फलं भवत्यन्तरेणानयति — घट्टीत्यादिना । घट्टित्वा रणवन्नादिह ग्रहणम् । अन्यथेण्यन्तत्वादेव सिद्धेः । तत्राप्यंश इच्छतो धातेश्च विशेषः । इच्छार्थस्य तु सर्वदा इष्टिरेव ॥ रोगनाम्नीति । आख्याग्रहणविवरणमिदम् । काशिकायाम् 'आख्याग्रहणं रोगस्य चेत् प्रत्ययान्तेन संज्ञा भवती'त्युक्तम् । एवञ्च विशिष्टात् प्रतीयमानस्य रोगविशेषस्य ण्वुल् बोधक इत्यर्थः ॥ असुब्व्यवहित इति किम् । बहुपरिव्राजका नगरी । अत्र बहुभिः परिव्राजकारैरुपायो व्यवधानमिति नेद् भवति । आपि किम् । पाचक इत्यत्र मा भूत् । कादिति किम् । नन्दनेत्यत्र मा भूत् । पूर्वस्येति किम् । कटुकेति परस्य मा भूत् । अतः किम् । नौकेति यथा स्यात् ।

"कच्चित् प्रजा न बाधन्ते रोगाः प्रच्छर्दिकादयः"

इति सुभद्राहरणे। ग्रहणीति प्रवाहिकाया अर्थविवरणम् । ण्वुल् वाच्य इति । इदं भाष्यवार्तिकम् । तत्रोक्तमुदाहरणं --'का नामासिका अन्येष्वीहमानेषु,

इक्श्तिपौ धातुनिर्देशे वाच्यौ पुंसि च तौ मतौ।
भिदिश्च पचतिर्हन्तिः श्तिपः श्तिवाच्छवादयः ॥

द्वौ भावेऽपीति भोजः। पचिं हन्तिं मार्ष्टि वा करोति। 'वर्णनिर्देशे कारो वाच्यः' (वा० ३. ३. १०८)। अकारः। बाहुलकादेवकारस्वाहाकारादि। 'रादिफः' (वा० ३. ३. १०८)। (रेफः)। एतावपि पुंसि। इणजादिभ्यः स्त्रियाम्। आजिः। बाहुलकाद् *वीत्वं न। 'वण शब्दे' वाणिर्वाक्। पुनर्ङीषि वाणीत्यपि। 'इक् कृषादिभ्यः' (वा० ३. ३. १०८)। कृपिरियम्। कुटिः कौटिल्यम्। त्रुटिः काललवः। तुटिरित्यरेफमाह माधवः। भ्रमणं भ्रमिः। गरणं गिरिः। शैले त्वौणादिकः ॥

संज्ञायाम् (३. ३. १०९.)

नाम्नि स्त्रियां ण्वुल् स्यात्। पुष्पप्रचायिका। सालभञ्जिका ॥

विभाषाख्यानपरिप्रश्नयोरिञ् च (३. ३. ११०.)

प्रश्नोत्तरयोर्भावे स्त्रियाम् इञ् ण्वुल् च वा स्यात्। कां त्वं पाठिमपाठीरिति प्रश्ने। सर्वां पाठिमपाठिषमित्युत्तरे। पाठिकामित्यपि। विकल्पात् क्तिनाद्यपि। पुनःप्रयोगस्य कृञर्थ एवास्ति ॥

---

का नाम शायिकान्येष्वधीयानेषु' इति। तदनुवदन्नुदाहरति—आसिका शायिकेति। 'इक्श्तिपौ धातुनिर्देशे' इति भाष्यवार्त्तिकं विवरीतुमुदाहरणगर्भां कारिकामारचयति— इक्श्तिपावित्यादि। करोतीति। अनेन पचिहन्तिमार्ष्टयः पाकहननमार्जनपरा इति बोध्यम्। बाहुलकादिति। एवस्वाहयोर्वर्णताविरहेऽपीति भावः। आजिः युद्धम्। वीत्वमिति। वाणिरिति। इणन्तोऽयम्। कुटेरर्थः कौटिल्यमिति। गिरिरिति। 'गॄ निगरणे' इत्यस्मात् ॥ प्रचायिकेति। ण्वुलि अकादेशे वृद्धौ टापीत्वे रूपमिदम्। क्रीडाविशेषस्य संज्ञा ॥ आख्यानपरिप्रश्नयोरिति। अर्थतः परिप्रश्नस्य पूर्वत्वेऽप्यल्पाच्तरत्वादाख्यानस्य पूर्वनिपातः। पाठिकामित्यपीति। चकारात् ण्वुलीदं रूपम्। पुनःप्रयोगस्येति। प्रश्नोत्तरेषु च द्वितीयतया प्रयुज्यमानस्य तस्यैव धातो रूपस्य कृञर्थ एव फलमिति यावत्। सर्वां पाठिमपाठिषमित्यस्य

---

* वीत्वमिति। 'अजेर्व्यघञपोः' इति वीभावः ... इति काललवमदेवः।

पर्यायार्हर्णोत्पत्तिषु ण्वुच् (३. ३. १११.)

एषु चतुर्षु द्योत्येषु भावे ण्वुच् स्यात् । चित्त्वात् स्वरे भेदः ।

शायिकाद्य तव प्रापदर्हसि क्षीरपायिकाम् ।
पाचिका मे त्वया देया प्रोत्पन्ना मेऽभभोजिका ॥

आक्रोशे नञ्यनिः (३. ३. ११२.)

नञ्पूर्वाच्छापविषये भावेऽनिः स्यात् । अजीवनिस्तेऽस्तु ॥

इति स्त्रीलिङ्गाः ॥

---

ल्युट् च (३. ३. ११५.)

नपुंसके भावे ल्युट् स्यात् । योरनः । पचनम् । सवर्णदीर्घः । यानम् । मानम् ।

---

सर्वान् पाठानकरवमिति भावः ॥ पर्यायेति । पर्यायः परिपाटीक्रमः । अर्हः योग्यता । ऋणमन्यस्मै देयतया धार्यमाणम् । चतुर्णां क्रमेणोदाहरणं कारिकया संगृह्णाति — शायिकेत्यादिना । तथा चोदाहरणानि सुभद्राहरणाद् —

"पीनोरुस्तननम्राणां राजा भूत्वा पुरा किल ।
वारवारिरुहाक्षीणां निर्विष्टा शायिका त्वया ॥

ब्रह्मर्षीणामशेषाणां त्वमर्हस्यग्रसारिकाम् ।
अतितीव्रं तपस्तप्त्वा तपसा किन्न लभ्यते ॥

परश्शतैर्मखैरिष्ट्वा पराजितशतक्रतुः ।
धारयस्यमरेभ्यस्त्वं न पुरोडाशभक्षिकाम् ॥

तवोदपाद्यज्ञेषु सुराणां सोमपायिका ।
ओजस्विनो यया मत्तास्ते सपत्नानतापयन् ॥"

अजीवनिरिति ।

"मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥"

इति भावः ॥ इति स्त्रीलिङ्गाः — 'स्त्रियां क्तिनि'त्यधिकृत्य विहिताः कृतः परिसमाप्ताः ॥

महाभाष्यकृता कोऽसावनुमान इतीरणात् ।
ल्युडन्तोऽपि न पुल्लिङ्गो मानशब्दः प्रदुष्यति ॥

इति भोजः । गॄ । गुणः । णत्वम् । निगरणम् । 'अचि विभाषा (८. २. २१.) इति लत्वे निगलनम् । 'ङ्गपम उद्गिरण' इति धातुपाठे निपातनादित्वमपीति केचित् । गिरणं गिलनम् । कुचेः कुटादित्वेऽपि 'कुच सङ्कोचन' इति धातूक्तेर्ल्युटि गुणः । नुम्व्यवाये णत्वम् । बृहि । बृंहणम् । अनुम्यनुस्वारमात्रेऽपि । 'तृंहू हिंसायाम्' । तृंहणम् ॥

वा यौ (२. ४. ५७)

ल्युट्यजेर्वा वीत्वम् । वयनम् । अजनम् । वयतेस्तु 'आदेच —' (६-१-४५) इत्यात्वाद् वानमेव । ष्ठिवुसिवोर्दीर्घश्च ल्युटि वेति भोजः । ष्ठीवनम् । सीवनम् । अदीर्घे लघूपधगुणः । ष्ठेवनम् । सेवनम् । ष्ठिवेर्घञ्यपि दीर्घ इति केचित् । निष्ठीवः । निष्ठेवः । अतिशीङो ल्युटि अतिशायने तमबिष्ठनौ (५ ३-५५) इति निपातनाद् दीर्घोऽपि । अत एव सुखशायनमित्यादावप्याह हरः । 'मीनातिमिनोतिदीङां ल्यपि च' (६ १-५०) 'विभाषा लीयतेः' (६-१-५१)इति चात्वम् । मानं

---

नपुंसक इति । 'नपुंसके भावे क्त' इति पूर्वसूत्रादुत्तरत्र नपुंसकाधिकारादिदम् । अनुमानशब्दं नपुंसकाद् व्यभिचरितं साधूकुर्वन् भोजमतेन कारिकामारचयति — महाभाष्येत्यादिना । निगरणमिति । 'निगरणचलनार्थेभ्यश्चे'ति पाणिनिसूत्रम् । इत्वमपीति । 'ॠत इद्धातोरि'तीत्वं तु गुणव्यतिरिक्त एवेति न तेनेह निर्वाहः । सङ्कोचन इति । शुद्धादिदम् । ण्यन्तात् स्वयमेव णिनिमित्तो गुणो दुर्वार एव । अनुस्वारमात्रेऽपीति । अयोगवाहानामकारोपरि शर्षु च पाठस्योपसंख्यातत्वेनानुस्वारव्यवायेऽड्व्यवाय इति णत्वमिति भावः ॥ ल्युटीति । यौ इति ल्युटो ग्रहणम् । वयतेस्त्विति । 'वेञ् तन्तुसन्तान' इत्यस्य । आदेच इति । अज्यादेशस्य वेस्तु उपदेशे एजन्तत्वविरहादेत्वं नेति यावत् । ल्युटीति । ल्युट्समभिव्याहारे इत्यर्थः । 'ष्ठिवुसिवोर्दीर्घश्च वे'ति भोजीयसूत्रानुकरणमिदम् । सेवनमिति । भूवादेरप्यर्थान्तरे तुल्यम् । मीनातीत्यादि । 'आदेच' इत्यत आत्वमनुवर्तते । चकारादेज्विषये च । तत एतेषां ल्यपि एज्विषये च आत्वं भवतीत्यर्थः । स-

हिंसा । निमानं प्रक्षेपः । उपदानं क्षयः । आत्वाभावे गुणः । निलानम् । निलयनम् । मिमीलियां खलचोरात्वप्रतिषेधः । तस्मादेरचि निमयः । प्रमयः । लयः ॥

कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् (३. ३. ११६)

येन संस्पर्शने कर्तुः शरीरसुखसम्भवः ।
तत्कर्मोपपदे ल्युट् स्याज्जनैरनिलसेवनम् ॥

सुखस्पर्शाभावे तु पूर्वेण ल्युटि जनैर्नृपस्य सेवनमिति षष्ठीसमासनिषेधो वक्ष्यत इति भेदः ॥

करणाधिकरणयोश्च (३. ३. ११७)

अनयोरर्थयोर्ल्युट् स्यात् । टित्त्वान्ङीप् । लेखनी । शयनम् ॥ खलः प्रागर्थद्वयाधिकारः । दंशेः करणल्युटि नलोपो वाच्यः । दशनो दन्तः । भावे तु दंशनम् । ल्युटो बहुलत्वोक्तेः नन्दनी

---

दाह — आत्वमिति । हिंसेत्यादि । 'मीञ् हिंसायाम्', 'डुमिञ् प्रक्षेपणे', 'दीङ् क्षये' इत्यर्थानुसारेणेदम् । इहाप्युपदेश एवात्वविधानादिवर्णान्तलक्षणोऽच् न भवति, भवति चावर्णान्तलक्षणो युक् तस्मादुपदायः नोपदयः ॥ कर्मणीति । उपपदत्वद्योतनार्थमिदं सप्तम्यन्तम् । तदाह — कर्मोपपद इति । येनेत्यनेन कर्मैव परामृश्यते । येन कर्मणा संस्पर्शादित्यर्थः । कर्तुरिति । ल्युडन्तक्रियानिरूपितमिदं कर्तृत्वम् । अनिलसेवनमिति । उपपदसमासस्य नित्यत्वादिह विग्रहो न । प्रत्युदाहरणेनेदं स्पष्टयति — जनैर्नृपस्य सेवनमिति । 'उभयप्राप्तौ कर्मणी'ति कर्मणि षष्ठ्याः 'कर्मणि चे'ति निषेधान्न समासः, वाक्यमेवेति यावत् । इह प्रत्युदाहरणान्यसमस्तान्येव । कर्मणि किम् । तूलिकाया उत्थानं सुखम् । कर्तुरिति किम् । गुरोः स्नापनं सुखमिति काशिका ॥ खल इति । 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति विधास्यमानादिति शेषः । अर्थद्वयेति । करणाधिकरणेत्यादिः । खलि तु कर्मण्येव प्रत्ययः फलतीति तावद्व्यापी अयमधिकारः 'करणाधिकरणयोरि'ति । वाच्य इति । कित्ङितोरन्यतरत्वविरहोऽस्य वचने बीजम् । भाव इति । वचने करण इति विशिष्योपादानादिदम् । नन्दनीति । 'नन्दिग्रही'ति

रमणी कमनी ह्लादनी दरिद्राण इत्यादि कर्तरि । वसनभोजनाच्छादनादि कर्मणि । प्रस्कन्दनप्रपतनाद्यपादाने ॥

पुंसि संज्ञायां घः प्रायेण (३. ३. ११८)

केषाञ्चिद् धातूनां पुंसि नाम्नि करणाधिकरणयोरर्थयोर्घः स्यात् । स्मरत्यनेनेति स्मरः । क्रियते रत्नादिकमत्रेत्याकरः । आलयः । छादेर्ण्यन्तात् करणे घः । णिलोपः । छाद् अ ॥

छादेर्घेऽद्व्युपसर्गस्य (६. ४. ९६)

द्व्याद्युपसर्गहीनस्य छादेर्घे परे ह्रस्वः स्यात् । छदः । प्रच्छदः । तनुच्छदः । द्व्याद्युपसर्गयोगे तु[1] समुपच्छादः । समभिप्रच्छादः ॥

हलश्च (३. ३. १२१)

---

ल्यौ टित्त्वाभावात् ङीप् न स्यादिति तदंशे एव बाहुलकत्वं सफलम् । भुज्यन्त इति भोजनाः शालयः । वसनभोजनाच्छादनादीत्यादिना साजात्याद् अवस्रावावासिच्यश्याभरतयो ग्राह्याः । तेन अवस्रावणावसेचनाशनाभरणानि सिद्धानि । वैजात्याद् दाणः सम्प्रदाने च सम्प्रदानमिति सिद्धम् । तथा च भोजसूत्रं—'भुज्याच्छाद्यवस्रावावसिच्यादिभ्यः कर्मणि' 'दाणः सम्प्रदाने चे'ति । अपादान इति । इदमप्यपादाने ल्युडन्तोदाहरणं 'ध्रुवमपायेऽपादानम्' । प्रपतनादीत्यादिना प्रश्च्योतनप्रस्रवणोद्धरणादयो ग्राह्याः । आह च भोजः 'स्कन्दिपतिश्च्योतिस्रवत्यादिभ्योऽपादाने' इति ॥ अनेनेति, अत्रेति च । करणाधिकरणे अर्थौ द्योतयितुमिदम् । पुंसीति किम् । प्रसाधनम् । संज्ञायामिति किम् । प्रहरणो दण्ड इति काशिका । घे णित्त्वं सफलयितुं भङ्ग्यन्तरेण रूपान्तरसम्पादनमवतारयति — छादेर्ण्यन्तादित्यादिना ॥ द्व्यादीति । 'त्रिप्रभृत्युपसर्गेस्ये'ति वक्तव्यमिति काशिका । उत्तरा हि सङ्ख्या पूर्वां सङ्ख्यां बाधत इति न्यायेन त्रिप्रभृत्युपसर्गयोगेऽप्यद्व्युपसर्गत्वमस्तीति वचनमिदं सफलम् । नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते । इह णिलोपासिद्धत्वं स्थानिवद्भावो वा वचनसामर्थ्यात् परिहरणीये ॥ हलश्चेति । इह 'पुंसि संज्ञायामि'त्यतो घवर्जं करणाधिकरणरूपोऽर्थः, पूर्वसूत्राद् घञिति चानुवर्तते । तदाह कारिकया फलितं —

---

१. 'र्गे तु' क. ख. पाठः.

हलन्तेभ्यस्तु संज्ञायां घञेवोक्तार्थयोर्न घः ।
वेदश्च लेख इत्यादि तेनाजन्तेभ्य एव घः ॥

गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च (३. ३. ११९)

हलन्तत्वेऽपि घान्ता एते । गोचरो नेत्रादिविषयः पश्वाचरणदेशो वा । सञ्चरो मार्गः । व्यजो व्यजनम् । चकारादाकषनिकषादि । द्वौ कषणपाषाणार्थौ ॥

अध्यायन्यायोद्यावसंहाराधारावायाश्च* (३. ३. १२२)

अजन्तत्वेऽपि नाम्नि घञन्ता एते । न्येति निश्चिनोत्यनेनेति शास्त्रयुक्त्यादिरत्र न्यायः, न अभ्रेषः । युता भवन्त्यत्रेत्युद्याव उत्सवः । संहारः समूहः । आवायस्तन्तुवानस्थानम् ॥

---

हलन्तेभ्यस्तु संज्ञायामित्यादि । घञेवेति पुनर्विधानात् । वेदलेखयोः कर्मार्थतयापि ग्रहणसम्भवात् करणाधिकरणे उपलक्षणमित्यपि बोध्यम् ॥ हलन्तत्वेऽपीति । 'हलश्चे'त्यस्य पूर्वापवाद इत्यर्थः । घान्ता एत इति । निपात्यन्त इति शेषः । नेत्रादिविषय इति । संज्ञी बोध्यतेऽनेन विवरणेन । एवं मार्ग इत्यादिना च । चकारादिति । चकारोऽनुक्तसमुच्चयार्थः । कषः निकष इति काशिका । भोजस्तु 'गोचरसञ्चरवहव्रजव्यजक्रमापणनिगमबकभगाकर्षनिकषाश्चे'ति सूत्रयन् बकभगादीनपि सङ्गृह्णाति । क्रमनिगमकषेषु स्वर एव भेदः ।

"शाखाकरचलत्पत्रव्यजवातैर्हृतक्लमाः ।
अधीध्वे निगमान् कच्चित् सुहृद्भिरवनीरुहैः ॥
तृणं बहुलमश्नन्त्यः पीनोध्न्यः पीवरैर्वहैः ।
कच्चित् सवनमोहय्यो गोचरेषु चरन्ति वः ॥"

इति सुभद्राहरणे । अजन्तेष्वपि घञन्ताः केचन निपात्यन्ते अध्यायेत्यादिना । तदाह — अजन्तत्वेऽपीति । न अभ्रेष इति । भ्रेषो भ्रंशः तदन्योऽभ्रंशः । स चार्हतामात्रपर्यवसायी । 'अभ्रेषन्यायकल्पास्त्वि'त्यमरः । इह

---

* 'आधारावायशब्दौ वार्त्तिकात् प्रक्षिप्तौ' इति केरलवर्मदेवः । तथा च 'हलश्चे'ति सूत्रे भाष्यवार्त्तिकं 'घञ्विधाववहाराधारावायानामुपसंख्यानमि'ति ।

उदङ्कोऽनुदके (३. ३. १२३)

तैलादेरुद्धृतिदर्वी सन्दंशश्चोदङ्कः । उदकस्य तूदञ्चनः ॥

जालमानायः (३. ३. १२४)

करणे घञयम् ॥

खनो घ च (३. ३. १२५)

खनेः करणाधिकरणयोरर्थयोर्घश्च घञ् च स्यात् । आखनः आखानः । चकाराद् भजादेश्च घः । भजनीयो भगः । खल्यते सञ्चीयतेऽत्र धान्यमिति खलः । 'खनेर्डो डरेकेकवकाश्च वाच्याः' (वा० ३-३-१२५) डित्त्वाट्टिलोपः । आखः । आखरः । आखनिकः । आखनिकवकः । आखादयः खनित्राख्याः ॥

ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् (३. ३. १२६)

कृच्छ्रार्थे दुश्शब्दे अकृच्छ्रार्थयोरीषत्स्वोश्चोपपदयोः धातोः

---

च निपातने न्यायोऽन्यादृशः, संज्ञायां शाकयुक्त्यादेः । न्यायवर्जमन्येऽधिकरणेऽर्थे ॥ उदङ्क इति । उत्पूर्वादञ्चतेर्घञि निपातनमिदं 'हल' इत्येव सिद्ध उदकपर्युदासाय ॥ आनाय इति । अजन्तत्वादर्थविशेषे घञन्तनिपातनम् । 'आनायः पुंसि जालं स्यादि'त्यमरः ।

"आनायेन समं हृतेषु मणिभिः शम्बूकयूथेषु"

इति रङ्गदेवः ॥ चकाराद् भजादेश्च घ इति । "खनो घ चे'ति घित्करणमन्यतोऽपि ज्ञापनार्थम् । तेन खलो भगः पदं चेत्यादि सिध्यतीति" हरदत्तः । भजादेरित्यत्रत्यमादिग्रहणं सफलयति — खल्यत इत्यादिना ।

"मुनीनां मृत्तिकाखानान् कर्तुकामा इवाखनन् ।

... .... .... ....

इङ्गुदीतैलमुत्सृज्य तैलोदङ्केन भाजनात् ॥"

इति सुभद्राहरणे । आख आखर इत्यादि । इदं 'डडरेकेकवकाश्च'

---

१. 'योर्घ' क. ख. पाठः.

खल् । भावकर्मणोश्चायमुक्तः । भावे दुरासं त्वया, ईषदासं, स्वासम् । कर्मणि दुष्करः । ईषत्करः । सुकरः । दुर्लभः सुलभ इत्यत्र 'न सुदुर्भ्यां केवलाभ्याम्' (७-१-६८) इति लभेर्न नुम् । अन्योपसर्गयोगे तु 'उपसर्गात् खल्घञोः' (७-१-६७) इति नुमेव । सूपलम्भः । अतिसुलम्भः । सुदुर्लभ इत्यादौ पुनः प्रादिसमासः । बाहुलकात् कृत्योऽपि । दुर्लभ्यः । 'मिमीलियामि'ति खल्यात्वनिषेधः । सुखनिक्षेप्यम् ईषन्निमयः । दुष्प्रमयो रिपुः ! सुलयमनेन ॥

## कर्तृकर्मणोश्च भूकृञोः (३. ३. १२७)

कर्तृपूर्वाद् भुवः कर्मपूर्वात् कृञश्चेषद्दुस्सुयोगे खल् स्यात् ॥

अकर्मत्वाद् भुवो भावे कृञः कर्मार्थ एव तत् ।
च्व्यर्थयोगश्च वाच्योऽत्र भवतेषत्पदुम्भवम् ॥

---

इति सूत्रेण भोजः साधयति । भावकर्मणोरिति । 'करणाधिकरणयोरिति निवृत्तमि'ति काशिका । दुरासमिति । नपुंसकनिर्देशो भावाभिव्यञ्जकः ।

प्रादिसमास इति । सुलभदुर्लभशब्दयोः सिद्धयोरयं समासः । तेन केवलाभ्यामिति नुमभावः सिद्धः ।

"गावः सुदोहास्तत्रासन्नीषदापं समित्कुशम् ।
दारु चादुर्लभं भूरि तापसैरग्निहोत्रिभिः ॥"

कृत्योऽपीति । तथाच नारायणीये प्रयुक्तम् —

"एवं दुर्लभ्यवस्तुन्यपि सुलभतया हस्तलब्धे"

इति सुभद्राहरणे । मिमीलियामिति । 'निमिमीलियां खलचोरात्वं नेति वाच्यमि'ति वार्तिकम् । सुखनिक्षेप्यमिति । ईषन्निमय इत्यस्यार्थविवरणम् । अकृच्छ्रार्थं द्योतयितुं सुखशब्दोपादानम् ॥ 'अकर्मत्वादि'त्यादिभिः कारिकाभिः 'कर्तृकर्मणोश्च भूकृञोरि'ति सूत्रमर्थतो विवृण्वन्नुदाहरणघटनया विशदयति —अकर्मत्वादिति 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवदि'ति व्युत्पत्तेर्योग्यतानुसन्धानादिति भावः । च्व्यर्थयोग इति । 'कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यमि'ति काशिका । 'भूकृञ्भ्यां कर्तृकर्मणोश्च च्व्यर्थे' इति भोजसूत्रम्

अपटोस्ते पटुत्वेन भवनं लघ्विती‌र्यते ।
एवं स्वाढ्यम्भवं तेन तया दुस्सुन्दरिंभवम् ॥
ईषन्मालङ्करं पुष्पं सुपिण्डङ्कर ओदनः ॥
दुस्सेनानिङ्करो भीरुः खित्त्वाद्ध्रस्वमुमागमौ ।

आतो युच् (३. ३. १२८)

आदन्तात् खल्विषये युच् स्यात् । दुर्ज्ञानः । सुज्ञानः । ईष-त्पानः । शासियुधिदृशिधृषिमृषिभ्यो युज् वाच्यः । दुश्शासनः सुशा-सन इत्यादि ॥

क्तिच्क्तौ च संज्ञायाम् (३. ३. १७४)

नाम्न्याशिषि द्योत्यायां क्तिच्क्तौ च स्तः । देवोऽमुं देयादि-ति प्रार्थनया जातो देवदत्तः । भूयादित्याशास्यमाना भूतिः । रम् ति ॥

न क्तिचि दीर्घश्च (६. ४. ३९)

अनुदात्तोपदेशवनतितनोत्यादीनां क्तिचि परे अनुनासिकलोप-तदभावे 'अनुनासिकस्य क्विझलोः— ' (६-४-१५) इति दीर्घश्च प्राप्तो न स्यात् । रन्तिः । सन् ति ॥

सनः क्तिचि लोपश्चास्यान्यतरस्याम् (६. ४. ४५)

दानार्थस्य सनेः क्तिचि परेऽन्त्यलोपः आत्वं च वा स्यात् । सतिः सातिः सन्तिः ॥

धातुसम्बन्धे प्रत्ययाः (३. ४. १)

---

"ईषत्पानङ्करैस्त्यक्त्वा छदान् दुर्भोजनङ्करान् ।
पलाशपत्रैः पात्राणि रचयन्ति स्म तापसाः ॥"

इति सुभद्राहरणे । शासीत्यादि । 'शासियुधिदृशिधृषिमृषिभ्यश्चे'ति भोजसूत्रम् ॥ आशिषीति । 'आशिषि लिङ्लोटावि'त्यत आशिषीत्यनुवर्तते ॥

धात्वन्तरस्य विशेषणत्वे भूतादिप्रत्यया भविष्यदादिधात्वर्थेऽपि स्युः । कंसो हतो भविष्यति । अत्र हत इति भविष्यतीत्यस्य विशेषणम् । अत्र हननस्य भावित्वेऽपि भूतप्रत्ययः क्तो जातः । एवं गमिष्यन्नभूदित्यादि ॥

अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा (३. ४. १८)

प्रतिषेधार्थयोरलंखल्वोरुपपदयोः प्राचां मते भावे क्त्वा स्यात् । कित्त्वादगुणः ॥

कृत्वालम् । कृत्वा खलु । क्त्वान्तस्य तुमुन्वत् सौ कृते ॥

क्त्वातोसुन्कसुनः (१. १. ४०)

एतदन्ता अव्ययाख्याः । तेन सुलुक् । उपपदसमासे प्राप्ते ॥

---

सन्तिरिति । लोपात्वयोरभाव इदम् ॥ धात्वन्तरस्य विशेषणत्व इति । इह धातुशब्देन तदर्थो भावः । नह्यर्थपरतन्त्रो धातुरन्येनाभिसम्बद्धुमलम् । सम्बन्धश्च विशेषणविशेष्यभाव एवेत्याह — विशेषणत्व इति । एवं च विशेषणभूतस्य विशेष्यमुखप्रेक्षितया तत्रैव कालान्तरानुरोधिनः प्रत्ययाः साधव इति भावः । एतावता कंसो हतो भविष्यतीत्यादौ भूतानुरोधितया भविष्यत्कालः भूतकालेनाभिसम्बध्य साधूक्रियतामिति शङ्काया नोत्थितिः । तस्य विशेष्यत्वात् । एवञ्च भूते विहितोऽपि इह भविष्यदर्थो बोध्य इति यावत् ।

"वसन् ददर्शावतरन्तमम्बरात्"

इति माघः । इह वर्तमानेऽर्थे लडादेशः शता परोक्षे भूते लिडर्थो द्रष्टव्यः।

"ते तमूचुर्गमिष्यन्तो धन्वी गच्छ त्वमग्रतः ॥"

इति सुभद्राहरणे इत्यादीन्युदाहरणानि द्रष्टव्यानि ॥ कृत्वालं कृत्व खल्विति । उपपदयोरप्यलङ्खल्वोरसमासं द्योतयितुमुत्तरत्र प्रयोगः ।

'निर्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ।'

---

१. 'रवि' ग. पाठः.

अमैवाव्ययेन (२. २. २०)

अव्ययेन चेदमन्तेनैवाव्ययेन सह विहितमुपपदं समस्यते। नान्याव्ययेन इत्यलंखल्वोरसमासः। प्राचामित्युक्तेरन्यमते करणेनाकम्॥

समानकर्तृकयोः पूर्वकाले (३. ४. २१)

एककर्तृकयोः क्रिययोः पूर्वकालक्रियायां क्त्वा स्यात्। भुक्त्वा व्रजति कृष्णः। अव्ययकृत्त्वेन भावार्थत्वाद् भोजनेऽतीते व्रजतीत्यर्थः। भिन्नकर्तृके न। कृष्णेन भुक्ते रामो व्रजति। क्रियाबहुत्वेऽपि स्यात्। स्नात्वा भुक्त्वा भूषित्वा व्रजति॥

न क्त्वा सेट् (१. २. १८)

सेट् क्त्वा न कित् स्यात्। तेन गुणः शयित्वा। नर्तित्वा। ध्वंसित्वा। अत्राकित्त्वान्नलोपाभावः॥

मृडमृदगुदकुषक्लिशवदवसः क्त्वा (१. २. ७)

एभ्यः क्त्वा कित् स्यात्। मृडित्वा मृदित्वेत्यादि। वद्वसोर्यजातित्वादुत्वम्। उदित्वा। उषित्वा॥

---

इति माघः। करणेनालमिति। अलंयोगे तृतीया॥ क्रिययोरिति। धात्वर्थभूता क्रियेह विवक्षिता। इदं समानः कर्ता ययोर्धात्वर्थयोरिति काशिकायां स्पष्टम्। क्रियायां क्त्वा स्यादिति। क्रियायां वर्तमानाद्धातोरिति यावत्। अथवा 'अव्ययकृतो भाव' इति क्त्वाया भावार्थत्वं स्फोरयितुमीदृशं विवरणम्। पूर्वकाल इति किम्। पठति च लिखति च। क्रियाबहुत्वेऽपीति। सूत्रे 'द्विवचनमतन्त्रमि'ति काशिका। अपूर्वकालेऽपि क्वचित्—मुखं व्यादाय स्वपिति, सम्मील्य हसति। 'अत्रोपसङ्ख्यानमपूर्वकालत्वादि'ति वृत्तिः। भोजस्तु 'व्यादान्निमील्यादेरपूर्वकालेऽपि' इति सूत्रयति। तत्रादिग्रहणात् पादौ प्रसार्य पतति, दन्तान् प्रकाश्य जल्पतीत्याद्यपि सिद्धम्॥ न किदिति। 'असंयोगाल्लिट् किदि'त्यतः किदित्यनुवर्तते। नलोपाभाव इति। कित्त्वा-

## रुदविदमुषग्रहिस्वपिप्रच्छः संश्च (१. २. ८)

एभ्यः क्त्वा संश्च कित् स्यात् । रुदित्वा[1] विदित्वा । मुषित्वा । कित्त्वाद् ग्रहादेः प्रसारणम् । 'ग्रहोऽलिटि—'(७-२-३७) इति दीर्घः । गृहीत्वा । सुप्त्वा । छशां षः । पृष्ट्वा । स्वपिप्रच्छयोः सनर्थमुक्तिः । अत्रानिट्त्वात् कित्त्वमनिषिद्धम् ॥

## नोपधात् थफान्ताद् वा (१. २. २३)

नकारोपधात् थफान्तात् परः सेट् क्त्वा वा न कित् स्यात् । किश्वे नलोपः । ग्रथित्वा । ग्रन्थित्वा । गुन्फ, गुफित्वा गुंफित्वा । अनोपधात्तु नित्यमकित्त्वमेव । पोथित्वा । तोफित्वा । द्वौ हिंसार्थौ ॥

## वञ्चिलुञ्च्यृतश्च (१. २. २४)

एभ्यः सेट् क्त्वा वा न कित् स्यात् । वचित्वा वञ्चित्वा । 'लुञ्च अपनयने' । लुचित्वा लुञ्चित्वा । ऋतिः सौत्रो दयाजुगुप्सागतिषु । ऋतित्वा अर्तित्वा ॥

## तृषिमृषिकृशेः काश्यपस्य (१. २. २५)

एभ्यः सेट् क्त्वा वा न कित् स्यात् । काश्यपोक्तिः पूजार्था । तृषित्वा तर्षित्वा । मृषित्वा मर्षित्वा । कृशित्वा कर्शित्वा ॥

## रलो व्युपधाद्धलादेः संश्च (१. २. २६)

---

भावस्य साध्यमनेकविधमिति विचार्येदम् । अनिदितामिति प्राप्तो नलोपः कित्त्वनिबन्धनो नेति भावः ॥ कित् स्यादिति । स्वतः कितः क्त्वायाः पुनः कित्त्वविधानं 'न क्त्वा सेडि'ति निषेधस्य पुरस्तादपवादमर्यादया प्रतिप्रसवाय ॥ द्वौ हिंसार्थाविति । 'पुथ हिंसायां', 'तुफ हिंसायामि'ति धातुपाठः ॥ वचित्वा । कित्त्वेन नलोपः । ऋतित्वेति । आर्धधातुके ऋतेरीयङ् विकल्प्यते । तदभावपक्ष इदम् ॥ तृषिमृषिकृशेरिति । 'न क्त्वा सेडि'ति नित्यनिषेधे प्राप्ते विकल्पः ॥ रलो व्युपधादिति । 'न क्त्वा सेडि'त्यतः सेडिति वर्तते । 'नोपधात्

---

1. 'टि दी' ग. पाठः.

उश्च इश्च वी। व्युपधाद् रलन्ताद्धलादेः परौ सेटौ क्त्वासनौ वा कितौ स्तः। मुदित्वा मोदित्वा। चितित्वा चेतित्वा।

देवित्वेत्यरलन्तत्वाद् विकल्पोऽयं न जायते।
वर्षित्वा व्युपधाभावादेषित्वेत्यहलादितः॥

अथेद्कथा।

'श्र्युकः किति' (७-२-११) इति इडभावः। श्रित्वा। भूत्वा। ऋत इत्। दीर्घः। तीर्त्वा। स्वरत्यादावप्युगन्तानां 'श्र्युकः किति'(७-२-११) इति इण्निषेध एवेष्टः। स्वृत्वा। सूत्वा। धूत्वा। ऊदितां तु वेट् स्यादेव। 'अशू व्याप्तौ'। छशां षः। अष्ट्वा अशित्वा। एवं रधादिविकल्पे रद्ध्वा रधित्वा इत्यादि। 'क्लिशः क्त्वानिष्ठयोः' (७-२-५०) इति वेट्। क्लिष्ट्वा क्लिशित्वा। अस्य 'मृडमृद—' (१-२-७) इति कित्त्वम्। पूङश्च पूत्वा पवित्वा। 'वसतिक्षुधोरिट्'(७-२-५२) इति नित्यमिट्। मृडादिना कित्त्वादुत्वमुक्तम्। उषित्वा। 'रलो व्युपधात्—' (१-२-२६) इति वा कित्त्वम्। क्षुधित्वा क्षोधित्वा। 'अञ्चेः पूजायाम्' (७-२-५३) इतीट्। अञ्चित्वा। गतौ तु अक्त्वा। अत्रानिट्त्वेन कित्त्वाभ्नलोपः।

---

थफान्ताद्वा इति सूत्रतो वेति चानुवर्तते। वा कितौ स्त इति। फलितमिदम्। सन्यप्राप्तस्य क्त्वायां प्राप्तस्य च निषेधस्य विकल्पनात्। रलिति प्रत्याहारः। रलन्ताद् व्युपधात् हलादेरिति सूत्रस्य प्रयोजनं कारिकया सङ्गृह्णाति — देवित्वेत्यादिना॥

अथेद्कथा। प्रस्तुतक्त्वाविषयिण इट इत्यर्थः॥

तदारभते—श्र्युकः कितीति। दीर्घ इति। वोरित्यादिः। तीर्त्वेति।

"तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीयः।"

इत्यनर्घराघवे। स्वरत्यादावपीति। 'स्वरतिसूतिसूयतिधूञूदितो वे'ति विकल्पितेटामपीति यावत्। ऊदितां त्विति। उगन्तत्वाभावादिति शेषः। क्लिशित्वेति॥

"अदातरि वृथायानात् क्लिशित्वाप्यन्यतो वरम्।"

इति। कित्त्वमिति। ततो गुणाभावः। पूङश्चेति। तेन क्त्वानिष्ठयोरिट्-

लुभोऽविमोहने* त्विट् स्याद् वा कित्त्वं रल इत्यपि ।
लोभित्वा वा लुभित्वा वा केशान् नृत्यति बालिका ॥

अन्यत्र 'तीषसह —' (७ २-४२) इति इड्विकल्पाद् रलः कित्त्वविकल्पाच्च लुब्ध्वा लुभित्वा लोभित्वा ॥

जॄव्रश्च्योः क्त्वि (७. २. ५५)

अनयोः क्त्वायां नित्यमिट् स्यात् । इट्यकित्त्वाद् गुणः । प्रसारणाभावश्च ॥

वॄतो वा (७. २. ३८)

जरित्वा जरीत्वा । व्रश्चित्वा । जॄषो जीर्त्वेति केचिदित्यनिच्छयाह माधवः ॥

उदितो वा (७. २. ५६)

उदितो धातोः क्त्व इड्विकल्पः । शमु, शमित्वा । 'अनुनासिकस्य—' (६-४-१५) इति दीर्घः । शान्त्वा । वृधु, वर्धित्वा वृद्ध्वा ।

---

विकल्पनादाह— पूत्वा पवित्वेति । 'पूङः क्त्वे'ति सेटः कित्त्वनिषेधाद् गुणघटितमुदाहरणं पवित्वा । उत्वामिति । सम्प्रसारणादिति शेषः । नलोप इति । 'अनिदितामि'त्यनेन । अञ्चूपरिमाणग्रहणे नायमिति वार्त्तिकम् । लुभोऽविमोहने इति । सूत्रानुकरणमिदम् । अनेन लुभः क्त्वानिष्ठयोरविमोहनेऽर्थे नित्यमिड् विधीयते । रल इत्यपीति । अनेन सेटः क्त्वायाः कित्त्वविकल्पः सिद्धः । अत उदाहरणं — लोभित्वा वा लुभित्वा वेति । केशानिति । अविमोहनं द्योतयितुमिदमर्थविवरणं—लुभित्वा लोभित्वेति । अविमोहने तद्विरहेऽपीदं द्वयं समानम् । अविमोहने लुब्ध्वेत्यस्याभावो विशेषः ॥ जॄव्रश्च्योरिति । जरतेः 'श्र्युक' इति निषेधे वृश्चतेरूदिता विकल्पे च प्राप्ते वचनमिदं नित्यार्थम् ॥ अनिच्छयाह माधव इति । इत्थं हि तदीयो ग्रन्थः— "अत्रात्रेयः किञ्चिदाह —'जॄव्रश्च्योः क्त्वि' इतीड्विधौ सानुबन्धकत्वादस्याग्रहणाद् 'श्र्युकः किती'ति निषेधे जीर्त्वेति भवितव्यमिति । स्वयमेव सानुबन्धकत्वेऽपि 'जॄस्तम्भु' इत्यादि ग्रहणं चाह । एवं नियमे कारणं स प्रष्टव्यः" इत्यादि ॥ उदितो वेति । पूर्वतः क्त्विग्रहणमनुवर्तते ॥ अचो

---

* 'विमोहनमाकुलीकरणमि'ति केरलवर्मदेवः ।

खनु, खनित्वा खात्वा । अत्र 'जनसन—'(६-४-४२) इत्यात्वम् । क्रमु, क्रमित्वा । अनिट्त्वे तु ॥

### क्रमश्च क्त्वि (६. ४. १८)

अस्य झलादौ क्त्वि परेऽचो दीर्घो वा स्यात् । क्रान्त्वा क्रन्त्वा ॥

### क्त्वि स्कन्दिस्यन्दोः (६. ४. ३१)

अनयोः क्त्वि परे नलोपो न स्यात् । 'झरो झरि—' (८-४-६५) इति दलोपः । स्कन्त्वा । स्यन्त्वा । स्यन्देरूदित्वात् स्यन्दित्वेत्यपि ॥

### जान्तनशां विभाषा (६. ४. ३२)

जान्तानां नशेश्च क्त्विपरे नलोपो वा न स्यात् । कुत्वचर्त्वे । भक्त्वा भङ्क्त्वा । रक्त्वा रङ्क्त्वा । नशेः 'मस्जिनशोर्झलि' (७ १-६०) इति नुम् । तस्य वा लोपः । नष्ट्वा नंष्ट्वा । मस्जेश्चान्त्यात् प्राक् नुमि सलोपे जान्तत्वाद्वा नलोपः । मक्त्वा । मङ्क्त्वा । सेट्त्वे त्वकित्त्वान्नलोपाप्रसङ्ग एव । अञ्जित्वा । 'अञ्जू व्यक्तावि'त्यूदित्वादिट् । 'द्यतिस्यति—'(७-४-४०) इतीत्वम् । दित्वा । सित्वा । मित्वा । स्थित्वा । 'शाच्छोरन्यतरस्याम्' (७-४-४१) । शित्वा शात्वा । छित्वा छात्वा । 'दधातेर्हिः' (७-४-४२) । हित्वा ॥

### जहातेश्च क्त्वि ॥ (७. ४. ४३)

---

दीर्घ इति । उपधादीर्घप्रकरणे स्थितस्य प्रकृते फलमच एवेति मत्वेदम् । प्रक्रम्येत्यादौ बहिरङ्गोऽपि ल्यबादिरन्तरङ्गानपि विधीन् बाधत इति पूर्वं दीर्घप्रवृत्तिः । अथवा झलादित्वनिमित्तस्य नङ्क्ष्यमाणत्वादकृतव्यूहपरिभाषया वा ॥ स्यन्दित्वेति । अत्र 'न क्त्वा सेडि'ति कित्त्वप्रतिषेधादेव नलोपाभाव इति काशिका ॥ नशेर्मस्जीति । रञ्जिभञ्जिवत् स्वाभाविकस्य नकारस्याभावान्नलोपप्रसक्तिमापाद्य प्रक्रियाविशदीकरणार्थमिदम् । सेट्त्वे त्विति ।

अस्य क्त्विपरे हिः स्यात्। हित्वा। हाङस्तु हात्वा। 'दो दद् घोः (७.४.४६)। दत्त्वा। 'अदो जग्धिर्ल्यप् ति किति' (२.४.३६) इति जग्ध्यादेशः। तस्य धत्वम्। 'झरो झरि—' (८.४.६५)। जग्ध्वा॥

अथ ल्यप्।

उपसर्गाणां 'कुगतिप्रादयः (२-२-१८) इति समासे कृते॥

## समासेऽनञ्पूर्वे क्त्वो ल्यप् (७. १. ३७)

अनञ्पूर्वे समासे क्त्वो ल्यबादेशः स्यात्। लः स्वरार्थः। पस्तुगर्थः। स्थानिवत्त्वेन कित्त्वादगुणः। तुक्। प्रहृत्य। प्रकृत्य। इकोऽधिना सह सवर्णदीर्घः। क्त्वो ल्यप्। अधी य। अत्र दीर्घत्वात् तुगभावे प्राप्ते॥

## षत्वतुकोरसिद्धः (६. १. ८६)

षत्वे तुकि च कर्तव्ये एकादेशविधिरसिद्धः स्यात्। तेन सवर्ण-

---

अञ्जूधातोर्वेट्त्वादिदम्॥ हाङस्त्विति। जहातेरिति निर्देशाद् हाक एव भवतीति सङ्कल्पः॥

अथ ल्यबिति। क्त्वाप्रकरणात् तदादेश इति यावत्॥

समासेऽनञ्पूर्वे क्त्वो ल्यप्। इह समासो गतिपूर्वः कारकपूर्वोऽव्ययपूर्वश्चेति बहुधा सम्भवी। कृद्ग्रहणे गतिकारकपूर्वस्यैव ग्रहणमिति परिभाषया गतिकारकपूर्वस्यैव ग्रहणे तु अनञ् इति नञ्पूर्वत्वपर्युदासो ह्यनर्थः। अतः सादृश्यात् सामान्यतोऽव्ययपूर्व एवेह समासो ग्राह्यः। तदिह सूचयन्न वतारिकामारचयति—उपसर्गाणां कुगतिप्रादय इति समासे कृत इति। नञ्समासे तु क्त्वान्तमेव रूपम्। अथोदाहरणम्—

> "अकृत्वा परसन्तापमगत्वा खलनम्रताम्।
> अक्लेशयित्वा चात्मानं यत् स्वल्पमपि तद् बहु॥"

नीतिः। अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधत इति न्यायेन हित्ववत्त्वा-त्वत्वदीर्घशूडिटो न भवन्ति। तेन प्रधाय, प्रदाय, प्रखन्य, प्रस्थाय, प्रपाय, प्रसन्य, परिपृच्छ्य, प्रदीव्येत्यादीनि रूपाणि सिध्यन्ति। ल्यपि प्रक्रिया-विशेषार्थमाह — इकोऽधिनेत्यादि॥ एकादेशविधिरिति। 'एकः पूर्वपर-

दीर्घासिद्धेरिकारसद्भावात् तुक् । अधीत्य । प्रतीत्य । प्रतीयेति त्वीधातोरेव ।

द्वारेऽस्येत्यत्र षत्वं स्यादादेशप्रत्ययेत्यतः ।
पूर्वरूपे त्वसिद्धेऽस्मिन्निणभावान्न तद् भवेत् ॥

'अदो जग्धिः —' (२-४-३६) इति ल्यपि जग्धिः । प्रजग्ध्य । 'ल्यप्य-जेर्वीभावो वे'ति कौमुदी । उदज्य । उद्वीय । ल्यपः कित्त्वाद् व्येञ्-वेञोर्यजादित्वेन ज्याधातोर्ग्रहिज्यादिना च प्रसारणे प्राप्ते सूत्राणि—

**ल्यपि च (६. १. ४१)**

**ज्यश्च (६. १. ४२)**

**व्यश्च (६. १. ४३)**

**विभाषा परेः (६. १. ४४)**

ल्यपि वेञः प्रसारणं न स्यात् । ज्याधातोर्व्येञश्च न । परि-व्येञस्तु वा स्यात् । एच आत्त्वम् । पटं प्रवाय । 'ज्या वयोहानौ' । प्रज्याय स्थितः । प्रव्याय । परिवीय परिव्याय । 'समोऽपि वे'ति कौमुदी । संवीय संव्याय । 'मीनातिमिनोतिदीङां ल्यपि च'(६-१-५०) 'विभाषा लीयतेः (६-१-५१) इति च ल्यप्यात्वम् । प्रमाय । निमाय । उपदाय । निलाय निलीय ॥

**वा ल्यपि (६. ४. ३८)**

अनुदात्तोपदेशवनतितनोत्यादीनां ल्यप्यनुनासिकलोपो वा स्यात् । व्यवस्थितविकल्पत्वान्मान्तानां वा अन्येषां नित्यम् । लोपे कृते ह्रस्वान्तत्वात् तुक् । नियत्य नियम्येत्यादि । मन्यादेस्तु अभिमत्य । निहत्य । वनेः प्रवत्य । तनादेः वितत्य ॥

---

येरि'ति प्रकरणादिदम् । ईधातोरिति । एकादेशासिद्धावपि प्रकृतिस्थ ईकारो दीर्घो दुरपह्नव इति यावत् । षत्वे सिद्धत्वं कारिकयोदाहरति — द्वारेऽस्येत्यादिना । ल्यपः कित्त्वादिति । स्थानिवद्भावेनेत्यादिः ॥ ल्यपि चेति । 'न सम्प्रसारण' इत्यतो न सम्प्रसारणमिति वर्तते । एवमुत्तरत्रापि । तदाह — सम्प्रसारणं न स्यादिति । समोऽपीति । समुपसृष्टादपि व्येञः सम्प्रसारणं नेत्यर्थः ॥ ह्रस्वान्तत्वादिति । स्थानिवद्भावस्त्वल्विधित्वान्न ।

ल्यपि लघुपूर्वात् (६. ४. ५६)

लघुपूर्वाद् वर्णात् परस्य णेर्ल्यपि परेऽयादेशः स्यात् । प्रकथय्य । प्रशमय्य । निशमय्य । निशम्येत्याणिजन्तात् सिद्धम् । अलघुपूर्वात् तु 'णेरनिटि'(६-४-५१) इति णिलोप एव । प्रपाल्य । प्रपाठ्य ॥

विभाषापः (६. ४. ५७)

आपेः परस्य णेर्ल्यप्ययादेशो वा स्यात् । समापय्य समाप्य ॥

क्षियः (६. ४. ५९)

अस्य ल्यपि दीर्घः स्यात् । प्रक्षीय । 'वेत्येक' इति कौमुदी । प्रक्षित्य ॥

न ल्यपि (६. ४. ६९)

ल्यपि परे घुमादेरीत्वं न । प्रधाय । प्रदाय । प्रमाय । प्रस्थाय । उपगाय । निपाय । निपीयेति तु 'पीङ् पान' इत्यस्मात् । विहाय । अवसाय ॥

अदेः क्त्वायां जग्धिसिद्धौ पुनर्ल्यपि तदुक्तितः ।
न क्त्वाकार्याणि सर्वाणि ल्यपि सन्तीति बोध्यते ॥
तेन द्यतिस्यतीत्यादिपञ्चसूत्रीगतं च न ।
तस्मात् प्रदाय प्रस्थाय विहायेत्याद्युदाहृतम् ॥

---

"अवगत्य तत्त्वमनिबोध्य पामरान्
भवतीह जन्तुरकृतात्मनां वरः ।"

इति नीतिः ॥ ल्यपि लघुपूर्वात् । 'णेरनिटी'त्यतो णेरिति पूर्वसूत्रादय् इति चानुवर्तते । तदाह — णेर्ल्यपि परेऽयादेशः स्यादिति । 'विगणय्य नयन्ति पौरुषमि'ति भारविः ॥ न ल्यपीति । 'घुमास्थागापाजहातिसां हलि' ईदिति चानुवर्तते । निपीयेति त्विति । 'निपीय यस्य क्षितिरक्षिणः कथा' इति श्रीहर्षप्रयोग इति शेषः । पीङ् पान इति । तदा स्वाभाविकमेवेत्वं स्थितम् । अथ ल्यपि परतः क्त्वाप्रत्ययनिबन्धनानां कार्याणामप्रवृत्तिं कारिकाभिरुदाहरणगर्भाभिः प्रपञ्चयति — अदेः क्त्वायामित्यादिभिः । इदं च 'समा-

दीर्घोऽनुनासिकान्तानां जनादेरात्वमूद् च न ।
प्रक्रम्याखन्य सन्दीव्य हलि चेतीह दीर्घता ॥

उपसर्गाद्ध्रस्व ऊहतेः (७. ४. २३)

उपसर्गात् परस्य ऊहेर्यादौ क्ङिति परेऽणो ह्रस्वः स्यात् । समुह्य । व्युह्य । 'व्यतीपातर्क्षमभ्युह्य' । अनुपसर्गात् तूह्यते । ओहेत्याङ्पूर्वस्यान्योपसर्गयोगे समोह्यत्यादौ ह्रस्वो मा भूदित्यण इत्युक्तम् । अनञ्पूर्वे क्त्वो ल्यबित्युक्तेर्नञ्समासे ल्यम्न । अकृत्वा । अव्ययपूर्वत्वे एव ल्यबिष्टः । अन्यत्र न । परमकृत्वा । उत्तमकृत्वा । सम्यक् कृत्वेत्यर्थः ॥

अथापूर्वकाले क्त्वाविधिः ।

उदीचां माङो व्यतीहारे (३. ४. १९)

उदङ्मते विनिमयार्थान्माङः क्त्वा स्यात् । ल्यप् । अपमा य ॥

मयतेरिदन्यतरस्याम् (६. ४. ७०)

अस्य ल्यपि वेत् स्यात् । इत्वे तुक् । अपमित्य अपमाय वा याचते । याचने नापमयत इत्युत्तरकाले क्त्वा । अनुदङ्मते याचित्वापमयत इत्यपि ॥

---

सेऽनञ्पूर्वे क्त्वो ल्यबि'ति सूत्रे 'ल्यबादेश उपदेशवचनम्' इत्युपक्रम्य 'यदयमदो जग्धिर्ल्यप् ति कितीति ति कितीत्येव सिद्धे ल्यब्ग्रहणं करोती'त्यन्तेन ग्रन्थेन भाष्ये स्पष्टीकृतस्य सारम् ॥ उपसर्गाद्ध्रस्व ऊहतेः । 'शृदॄप्रामि'त्यतो ह्रस्व इति 'केऽण' इत्यतोऽण इति पूर्वसूत्राद् यि क्ङितीति चानुवर्तते । तदाह — उपसर्गादित्यादिना । अव्ययपूर्वत्व एवेति । अनञिति पर्युदासलब्धोऽयमर्थः ॥

अपूर्वकाले क्त्वाविधिरिति । इदं व्यतीहार इत्यर्थग्रहणात् सिद्धम् ॥

क्त्वेति । अलंखल्वोरित्यतः क्त्वानुवर्तते । याचने नापमयत इति । याचने न कस्यचित् स्वलब्धस्य कार्यस्य विनिमयं करोतीत्यर्थः । इदमधोनिर्दिश्यमानात् सुभद्राहरणोदाहरणात् स्पष्टम् । तथाहि —

"अपमित्य तपोवित्तैरस्या भागं भगीरथः ।
निनीषुः स्वपितॄन् नाकं ययाचे चन्द्रशेखरम् ॥"

## परावरयोगे च (३. ४. २०)

अन्यतोभागस्थितं परम्, इतोभागस्थितमवरम् । ताभ्यां योगे क्त्वा स्यात् ।

लङ्का सेतुमतिक्रम्य तिष्ठतीह परा पुरी ।
सह्याद्रिः सेतुमप्राप्य तिष्ठतीहावरो गिरिः ॥

अत्रातिक्रमस्थित्योरप्राप्तिस्थित्योर्वा कालभेदाभावादपूर्वकालत्वम् । 'व्यादाय स्वपिति सम्मील्य हसतीत्यादेश्चोपसंख्यानमेककालत्वात्' । आद्युक्तेर्दन्तान् प्रकाश्य जल्पति इति ॥

## आभीक्ष्ण्ये णमुल् च (३. ४. २२)

पौनःपुन्ये द्योत्ये पूर्वकाले णमुल् क्त्वा च स्यात् । णित्त्वाद् वृद्धिः । हासम् । सौ कृते मान्तत्वेनाव्ययत्वाल्लुक् ॥

## नित्यवीप्सयोः (८. १. ४)

क्रियायाः पौनःपुन्ये व्याप्तिविवक्षायां च द्विरुक्तिः स्यात् । हासं हासं वक्ति । हसित्वा हसित्वा वक्ति । युक् । पायं पायं नृत्यति । लभ् अम् ॥

---

अत्र भागीरथीवर्णने फल्गुनः स्वीयानि तपोवित्तानि विनिमयेन समर्पयिष्यन् भगवन्तं चन्द्रशेखरं पितृभ्यो नाकं याचितवानिति व्यतीहार उत्तरकालत्वं च क्त्वायाः प्रतीयते ॥ परावरयोगौ विशदयन्नुदाहरति — लङ्का सेतुमिति कारिकया । सेतोः परतो लङ्का अवतरः सह्याद्रिरिति केरलीयस्य कवेर्दृष्ट्येदम् । व्यादायेति । इदमत्र क्त्वाविधौ पूर्वकाल इत्यस्य प्रयोजनविचारावसरे प्रपञ्चितम् ॥ आभीक्ष्ण्य इति । इदमाभीक्ष्ण्यं धात्वर्थक्रियायां विशेषणम् । आभीक्ष्ण्यवत्यां क्रियायां वर्तमानाद्धातोरित्यर्थः ॥ नित्यवीप्सयोरिति । केवलयोः क्त्वाणमुलोः क्रियागतमाभीक्ष्ण्यं द्योतयितुं शक्त्यभावाद् द्विर्वचनावश्यकता । तदिदमत्र सूत्रे —' अत्र क्त्वाणमुलोर्लोट इवास्वार्थिकत्वात् प्रकृत्यर्थोपाधिद्योतने सामर्थ्यं नास्तीत्याभीक्ष्ण्यद्योतने द्विर्वचनं भवती'ति भोजवृत्तौ स्पष्टम् । पायंपायमिति ।

विभाषा चिण्णमुलोः (७. १. ६९)

लभेश्चिण्णमुलोर्नुं वा स्यात् । धनं लम्भं लम्भं, लाभं लाभं वास्ते । सोपसर्गात् तु नित्यं नुमेव । शत्रूनालम्भमालम्भमास्ते ॥

अपगुरो णमुलि (६. १. ५३)

अस्य णमुलि परे एच आत्वं वा स्यात् । शस्त्रमपगारम् अपगारमभ्येति । अपगोरमपगोरं वा ॥

न यद्यनाकाङ्क्षे (३. ४. २३)

यच्छब्दयोगे तु क्त्वाणमुलौ न स्तः । यद् भुङ्क्ते ततो व्रजति । अनाकाङ्क्ष इत्युक्तेरत्रैव पुनः क्रियान्तराकाङ्क्षायां स्यादेव । यद् भुक्त्वा व्रजति ततोऽधीते । तत्राधीतिक्रियाकाङ्क्ष्यते ॥

विभाषाग्रेप्रथमपूर्वेषु (३. ४. २४)

एषूपपदेषु पूर्वकाले वा क्त्वाणमुलौ स्तः । अग्रे भोजं व्रजति । अग्रे भुक्त्वा व्रजति । सर्वेभ्यः प्राग् भुक्त्वेत्यर्थः । एवं प्रथमं पूर्वमिति योज्यम् ॥

अत्र क्त्वाणमुलोः सार्धमुक्तेषूपपदेष्वपि ।
अमन्तमात्रसम्बन्धस्याभावादसमासता ॥

---

"ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥"

इति दीक्षितचरणाः ॥ नुमिति । 'इदितो नुमि'त्यतो नुमिति, लभेश्चेति चानुवर्तेते । सोपसर्गादिति । 'व्यवस्थितविभाषा चेयम् । तेनानुपसृष्टस्य विकल्प उपसृष्टस्य नित्यं नुं भवती'ति काशिका । आलम्भमिति । अन्यत्रापि प्रालम्भि, प्रलम्भम् । 'यः सनिन्द उपालम्भ' इत्यमरः ॥ एच आत्वं वेति । 'आदेच' इत्यतस्तावानंशः, 'विभाषा लीयतेरि'त्यतो विभाषेति चानुवर्तते ॥ यद् भुक्त्वेति । यद् भोजमिति णमुलोऽप्युपलक्षणमिदम् ॥ अग्रे भोजमिति । पौनःपुन्यविरहाद् द्विरुक्तिर्न । अमन्तमात्रसम्बन्धस्येति । 'उपपदसमासः कस्मान्न क्रियते । उक्तं तत्रैवकारस्य प्रयोजनम् अमैव यत्तुल्यविधानमुपपदं तत् समस्यते नान्यदि'ति काशिकायामुक्तम् । ततोऽमा तुल्यविधानाभावादिह

तेन लुङ् न स्यात् । अग्रे च भोजं भोजं पूर्वमिति च स्यात् । वेत्युक्तेर्लडाद्यपि । अग्रे भुङ्क्ते ततो व्रजति ॥

कर्मण्याक्रोशे कृञः खमुञ् (३. ४. २५)

क्षेपे द्योत्ये कर्मपूर्वात् कृञः खमुञ् स्यात् । अमन्तत्वादुपपद-समासः । खित्त्वान्मुम् । चोरङ्कारमाक्रोशति । चोरशब्दमुक्त्वेत्यर्थः । एवं बधिरङ्कारमाह्वयति ॥

स्वादुमि णमुल् ॥ (३. ४. २६)

स्वाद्वर्थेषु पूर्वेषु कृञो णमुल् स्यात् । तेषां मान्तत्वं च निपात्यते । गुडैः स्वादुङ्कारं मधुरङ्कारं सम्पन्नङ्कारं लवणङ्कारं वा सक्तून् धाना वा भुङ्क्ते । सम्पन्नलवणावपि स्वादुपर्यायावेवेति हरः । क्त्वापीष्यते । तत्र मान्तत्वाभावाद् यथार्हं द्वितीया । स्वादून् स्वाद्वीं वा

---

समासो न भवतीत्यर्थ ऊह्यः । तत्फलमाह — लुङ् न स्यादिति । लडाद्यपीति । इदं वासरूपन्यायादेव सम्पाद्य विभाषाग्रहणवैयर्थ्यमिह न शङ्क्यम् । अत एव ज्ञापकाद् यत्र क्त्वाणमुलौ सह विधीयेते तत्र वासरूपविधिर्नास्तीति ज्ञाप्यते । तेनाभीक्ष्ण्ये लडाद्यभावः सिद्धः ॥ उक्त्वेत्यर्थ इति । चोरशब्दवचनमाक्रोशद्योतनाय । नतु वस्तुतस्तेन चोरेण भूयेत । करोतिरत्रोच्चारणार्थ इति दण्डनाथः ।

"शिवयाक्रुश्यमानोऽपि चोरङ्कारं शिवः सटाम् ।
एतां जटाटवीगूढां न मुञ्चति कदाचन ॥"

सुभद्रा ॥ णमुल् स्यादिति । प्रकृतः खमुञ् तु नानुवर्त्य विहितः अधिकसङ्ग्रहार्थम् । खमुञि तु 'अव्ययार्थमेव मान्तनिपातनं स्यादिति ङीप् स्यादेव । णमुलि तु मान्तत्वमपूर्वं विधीयमानमीकाराभावार्थं च च्व्यन्तस्य च मकारान्तार्थं विज्ञायते । अवश्यं चोत्तरत्र णमुल् विधेय इति लाघवभावादिहैव कृत' इति हरदत्तमिश्राः । तेनास्वाद्वीं स्वाद्वीं वा कृत्वा भुङ्क्ते स्वादुङ्कारमिति सिध्यति । मधुरादिष्वपि स्वाद्वर्थतया स्वादुत्वमस्तीति तत्रापि मान्तत्वं निपात्यत इत्याशयेनाह — मधुरङ्कारमित्यादि । क्त्वापीष्यत इति । इदं काशिकायां वासरूपेण साधितस्य भङ्ग्यन्तरानुवादः । अव्ययकृतां भावार्थत्वेन णमुलः कर्त्रर्थत्वविरहादिह तन्निरूपितकर्तुरनभिधानेन तृतीया भवत्विति शङ्कयापि नोत्थातव्यम् । प्रधानभूतभुजिक्रियानिरूपितकर्तुरभिधानात् तेनैवा-

कृत्वेत्यादि । इतः परं कषादिपर्यन्तं णमुलि पूर्वकालार्थो न । समानकर्तृकत्वं तु सर्वत्रेष्टम् ॥

अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् (३. ४. २७)

एषु पूर्वेषु निरर्थकत्वात् प्राप्ताप्रयोगस्य कृञो णमुल् स्यात् । अन्यथाकारं वदति । अन्यथा वदतीत्येवार्थः । एवंकारमित्यादि । कृञः सार्थकत्वे तु न । कार्याण्यन्यथा कृत्वा गतः ॥

यथातथयोरसूयाप्रतिवचने (३. ४. २८)

अक्षमया प्रतिवचनार्थे वाक्ये यथातथयोः पूर्वयोर्निरर्थकस्य कृञो णमुल् स्यात् ।

किं त्वमेवं ब्रवीषीति पृष्टेऽन्यो वक्त्यमर्षितः ।
यथाकारमहं जाने तथाकारं वदाम्यहम् ॥

---

त्रापि णमुल्प्रकृतिक्रियायां कर्तृमत्त्वावश्यंभावाच्च । इतः परमिति । अयोग्यतैव पूर्वकालार्थासम्बन्धे हेतुः ।' अन्यथा स्वाद्वादीनां भुज्यादिभिः सार्वकालिकतयान्वयसम्भवाद् व्याप्तौ सङ्कोचे मानाभावाच्च ॥ निरर्थकत्वादिति । सिद्धाप्रयोग इत्यस्य विशदीकरणमिदम् । निरर्थकमपि शब्दमाडम्बरप्रिया यदि प्रयुयुक्षन्ति तदा णमुल्घटितप्रयोगोऽनुशिष्यत इति यावत् । कृञः सार्थकत्वे त्विति । अन्यथोपपदस्येत्यादिः ॥ यथाकारमिति । यथा जाने तथा वदामीत्यर्थः । निरर्थकस्यापि णमुलन्ततया कृञः प्रयोगे तु असूयाप्रतिवचने नियमेन गम्येते इति विशेषः ।

"कथङ्कारं जटारण्ये गङ्गे! बम्भ्रम्यसे विभोः ।
असूययेति पृच्छन्तीं गौरीं प्रतिवदत्यसौ ॥

बम्भ्रम्येऽहं यथाकारं गौरीभर्तुर्जटावने ।
बम्भ्रम्येऽहं तथाकारं सुखिता दुःखितापि वा ॥

तीरेषु निवसन्त्यस्याः पिबन्तोऽस्यमृतं पयः ।
भुञ्जानाः फलमूलानि स्वादुङ्कारं महर्षयः ॥"

इति सुभद्रा ॥

## कर्मणि दृशिविदोः साकल्ये (३. ४. २९)

कर्मणः साकल्ये द्योत्ये कर्मपूर्वयोरनयोर्णमुल् । विद्वदर्शं मानयते दृष्टान् । सर्वानित्यर्थः ॥

यांश्चोरभूताँल्लभते विचारयति वेत्ति वा ।
तान् सर्वानपि हन्तीति चोरवेदं निहन्त्यसौ ॥

## यावति विन्दजीवोः (३. ४. ३०)

विन्देः शाभावान्न नुम्* । यावद्वेदं धनं ददाति । यावल्लभते तावदित्यर्थः । यावज्जीवं तपस्यति ॥

## चर्मोदरयोः पूरेः (३. ४. ३१)

अनयोः कर्मणोः पूर्वयोः ण्यन्तात् पूरेर्णमुल् । णिलोपः । चर्मपूरं सुतः सोमः । उदरपूरं पिबति । पूरयन् पिबतीत्यर्थः ॥

---

साकल्य इत्युपपदेनान्वेति । तदाह — कर्मणः साकल्य इति । लभते विचारयति वेत्ति वेति । विद इति सामान्यग्रहणाद् ज्ञाने लाभे विचारे चार्थे विद्यमानस्य सर्वस्यापि विदेर्णमुल्प्रकृतित्वमस्तीत्याशयः ।

"तीर्थदर्शं कृतस्नानः पुष्पवेदं कृतोच्चयः ।
तृप्यत्यस्यागतस्तीरमतिपुण्यं मुनिव्रजः ॥"

सुभद्रा ॥ विन्दजीवोरिति । लाभार्थं विदिं ग्राहयितुं नुंघटितो निर्देशः — विन्देति । शाभावादिति । तौदादिकः शोऽत्र शशब्देन गृह्यते ।

"यावज्जीवं यजन्ते ये ददतेऽधीयते च तान् ।
सकृदस्यां नराः स्नाताः सुकृतैरतिशेरते ॥
यावद्वेदं तदाहृत्य समिधः सकुशाद्यम् ।
पवित्राणां पवित्रेऽत्र निवसाम हृतश्रमाः ॥"

सुभद्रा ॥ पूरेरिति । ण्यन्तस्येदं, तदाह — ण्यन्तादिति । चर्मपूरं

---

* 'शे मुचादीनामित्युक्तेरि'ति केरलवर्मदेवः ।

**वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् (३. ४. ३२)**

अस्मिन् द्योत्ये कर्मपूर्वात् पूरेणमुल्। *तस्य वा ऊलोपश्च स्यात्॥

कूपप्रं वापिकापूरं वर्षति स्माद्य वारिदः।
यावता पूर्यते कूपस्तावदित्यवगम्यते॥

**चेले क्नोपेः (३. ४. ३३)**

चेलार्थेषु कर्मसु पूर्वेषु वर्षप्रमाणे द्योत्ये क्नोपेर्णमुल्। उन्दनार्थोऽयम्। ण्यन्तत्वाण्णिलोपः। चेलक्नोपं वर्षति वसनक्नोपम्। यावता चेलं सिच्यते तावद् वर्षतीति माधवोक्तम्। 'गात्रपुरुषयोः स्नातेरि'ति भोजः। वर्षप्रमाण इत्येव। गात्रस्नायं पुरुषस्नायं वा वर्षति। गात्रं स्नापयन् वर्षतीति ण्यर्थोऽत्रेष्टः॥

**निमूलसमूलयोः कषः (३. ४. ३४)**

अनयोः पूर्वयोः कषेर्णमुल्॥

**कषादिषु यथाविध्यनुप्रयोगः (३. ४. ४६)**

एतदादिषु 'उपमाने कर्मणि च'(३-४-४५)इत्यन्तेषु विधिमत एव धातोरनुप्रयोगः कार्यः। निगतमूलं प्राप्तमूलं कषति निमूलकाषं कषति, समूलकाषं कषति। अनुप्रयुक्तस्य क्रियासामान्यपरत्वात् समूलं कषतीत्येवार्थः॥

---

सुतः सोमः। यावता चर्म पूर्यते तावदित्यर्थः॥ तस्येति। अनेन सूत्रेऽस्यग्रहणस्य प्रयोजनमुपन्यस्तम्। अस्यग्रहणाभावे हि पूरावुपपदे वा यत्रकुत्रापि स्थितस्योकारस्य लोपः प्रसजेत्। तदा काशिकोक्तदिशा मूषिकाबिलपूरं वृष्टो देव इत्यादौ मूषिकागत ऊकारोऽपि लोप्येत। वर्षप्रमाणमर्थगम्यमुदाहरणे विवृणोति यावता पूर्यत इत्युत्तरार्धेन॥ चेलार्थेष्विति। तथाच माघः—

"यूनि गाढपरिरम्भिणि वस्त्रक्नोपमम्बु ववृषे यदनेन।"

ण्यर्थोऽत्रेष्ट इति। स्नातेरकर्मकत्वाद् गात्रपुरुषयोः कर्मणोरुपपदयोर्विधानादन्वययोग्यतासम्पादनार्थमिदम्। यावता गात्रं पुरुषश्च स्नाप्यते तावद् वृष्ट इति दण्डनाथः॥ एतदादिष्विति। एतच्छब्देन कषेर्णमुल्विधायकं शास्त्रं परामृश्यते। 'निमूलसमूलयोः कष' इत्यादिष्विति केरलवर्मदेवः

---

* 'पूरेरि'ति केरलवर्मदेवः।

## शुष्कचूर्णरूक्षेषु पिषः (३. ४. ३५)

शुष्कं कृत्वा शुष्कमेव वा पिनष्टि शुष्कपेषं पिनष्टि । एवं रूक्षपेषं पिनष्टि । रूक्षं परुषम् । चूर्णीकृतं पुनः पिनष्टि चूर्णपेषं पिनष्टि ॥

## समूलाकृतजीवेषु हन्कृञ्ग्रहः (३. ४. ३६)

क्रमेण योज्यम् । हन्तेर्णिति तत्वघत्वे । समूलघातं हन्ति । अकृतकारं करोति शूरः । कैश्चिदप्यकृतमद्भुतं करोतीत्यर्थः । जीवग्राहं गृह्णाति । जीवेतीगुपधात् कः । जीवन्तमेव गृह्णातीत्यर्थः । अनुप्रयोगस्य प्रादियोगेऽपि न दोषः । समूलघातं *न्यवधीत् । मृणाललावं निर्लून †इति ॥

---

स्पष्टमेवाह टिप्पण्याम् । इत्यन्तेष्विति । इदं 'कषादिषु यथाविध्यनुप्रयोग' इति वचनेनैव सिद्धम् । विधिमत एवेति । यस्मात् धातोर्णमुल्प्रत्यये भवति स एवानुप्रयोक्तव्य इति काशिका । विधिमत्त्वं च प्रकृते णमुल्विधिविषयत्वरूपम् । तच्च तत्प्रकृतित्वमेव । धातुसम्बन्धे प्रत्ययविधानादेव सिद्धेऽनुप्रयोगे नियमार्थमिदं 'यथाविधी'ति । यथाविधि तस्य विधिविषयस्यैव धातोरनुप्रयोगो नान्यस्येत्याशयः ।

"समूलकाषं कषतस्तरसा तीरपादपान् ।
कल्लोलानुद्वहन्तीं ते दद्दशुर्जाह्नवीं मुदा ॥"

सुभद्रा ॥ शुष्कं कृत्वेति । पेषणभाव्यां शुष्कतां सम्पाद्य पुनः पेषणमिति यावत् । अयमंशश्चूर्णरूक्षयोरपि सम्भवी । कृत्वेति विवरणम् इतः परं पूर्वकालत्वसम्बन्धद्योतनायापि ।

"शुष्कपेषं स्म पिंषन्ति तत्रापूपीयतण्डुलान् ॥"

इति सुभद्रा ॥ समूलघातं हन्तीति ।

"समूलघातमघ्नन्तः परान् नोद्यान्ति मानिनः ।"

इति माघः ॥ न दोष इति । उपसर्गाणां धातुगतार्थद्योतकत्वात् तद्योगे धातोरनन्यथात्वमिति मनसिकृत्येदम् । निर्लून इति । प्रादियोगेऽपि न दोष इति सामान्यतः सर्वत्राप्युपसर्गतुल्यमिति प्रदर्शनार्थमिदमुदाहरणान्तरम् ॥

---

१. 'त्वा वा शु' क ख. पाठः.

---

* 'न्यवधीदिति निपूर्वाद्धन्तेर्लुङि 'लुङि चे'ति वधादेश रूपम् । अतो नानुप्रयोगभेदः' इति केरळवर्मदेवः ।

† 'अत्र 'उपमाने कर्मणि चे'ति वक्ष्यमाणो णमुलि'ति केरळवर्मदेवः ।

### करणे हनः (३. ४. ३७)

करणपूर्वाद्धन्तेर्णमुल् । पाणिना हन्ति पाणिघातं हन्ति । असिघातं हन्ति ॥

### स्नेहने पिषः (३. ४. ३८)

स्नेहनार्थे करणे पूर्वे पिषेर्णमुल् । तैलपेषं पिनष्टि । जलपेषं पिनष्टि । द्रवद्रव्यं विना पेषणासम्भवात् तैलादेः करणत्वम् ॥

### हस्ते वर्त्तिग्रहोः (३. ४. ३९)

हस्तार्थे करणे पूर्वेऽनयोर्णमुल् । वर्तेर्णिलोपः । हस्तवर्त्तं वर्त्तयत्यौषधं दण्डं वा । पाणिवर्त्तम् । हस्तेन गुलिकीकरोति भ्रमयति चेत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् ॥

### स्वे पुषः (३. ४. ४०)

स्वशब्दार्थेषु करणेषु पूर्वेषु पुषेर्णमुल् । स्वपोषं धनपोषं गोपोषं भृत्यपोषं पुष्णाति पुष्यति वा । धनादिभिः पुष्णातीत्यर्थः ॥

---

"कुर्वन्नकृतकारं स लोकोत्तरपराक्रमः ।
राक्षसेष्वपि तीक्ष्णेषुरस्ताविं मुनिभिर्मुदा ॥"

सुभद्रा ॥ असिघातमिति ।

"महेषुघातं हत्वा स निशातानसतो वने ।"

इति सुभद्रा ॥ करणत्वमिति । साधकतमत्वरूपमविनाभावरूपं समर्थयते द्रवद्रव्यं विनेत्यादिना ॥

"पिष्टैर्गङ्गापयःपेषं कृतान्नीवारतण्डुलैः ॥"

सुभद्रा ॥ णिलोप इति । वर्तीति सूत्रे ग्रहणात् ण्यन्तोऽयं धातुः । पाणिवर्तमिति । हस्तार्थग्रहणादिदम् । औषधदण्डयोर्यथाक्रमं कर्मत्वोपपादनायाह — हस्तेनेत्यादिना ॥

"हस्तग्राहं द्विजानन्धान् स वृद्धांश्च गृहीतवान् ।
विष्टरेषु च मृष्टेषु पाणिवर्तमवर्तयत् ॥"

सुभद्रा ॥ स्वशब्दार्थेष्विति । आत्मात्मीयज्ञातिधनवाची स्वशब्दः । तेष्वर्थेषु तदर्थवाचकपर्यायेषूपपदेष्विति सामान्यतो विशेषतश्चोपपदेष्विति यावत् । स्वपोषमिति । आत्मपोषमपि । गोपोषमिति । धनविशेषवाचकः

## अधिकरणे बन्धः (३. ४. ४१)

एतत्पूर्वाद् बन्धेर्णमुल्। कारायां बध्नातीति कारबन्धं बध्नाति ॥

## संज्ञायाम् (३. ४. ४२)

बन्धनाम्न्युपपदे बन्धेर्णमुल्। क्रौञ्चपक्षिबन्धनसदृशो बन्धविशेषः क्रौञ्चो नाम। तद्रूपेण बध्नाति क्रौञ्चबन्धं बध्नाति। वराहबन्धं बध्नाति ॥

## कर्त्रोर्जीवपुरुषयोर्नशिवहोः (३. ४. ४३)

कर्तृभूतयोरनयोः पूर्वयोः क्रमान्नशिवहोः णमुल्। जीवन्नेव नश्यति जीवनाशं नश्यति। अतर्कितो म्रियत इत्यर्थः। पुरुषवाहं वहत्यसौ नृपम्। भृत्यो भूत्वा वहतीत्यर्थः।

---

स्वकीयविशेषवाचको वायं गोशब्दः। एवं भृत्यपोषमित्यादयो ग्राह्याः। पुष इति सामान्यग्रहणादाह — पुष्यति वेति।

"अजस्रमर्थिनः पार्थो धनपोषं पुपोष यत्।
द्विजान् स्वपोषं सोऽपुष्णात् तीर्थेष्विति किमुच्यते ॥
गोपोषं गव्यतोऽपुष्णात् हयपोषं हयो यतः।
सुवर्णपोषं सोऽवर्णि समः स्वर्णी यतश्च सः ॥"

सुभद्रा ॥ काराबन्धमिति। उपपदसमासेऽपि सप्तम्यन्तस्य बन्धेन समासः 'सिद्धशुष्कपक्वबन्धैश्चे'ति विहितः ॥ स्वरूपयोग्यतां व्यनक्ति — वराहबन्धमिति। तथाचोदाहरणं सुभद्रायां —

"वराहबन्धं बद्ध्वा स निहतान् पिशिताशनान्।
भोजयिष्यन् वयः श्रेणिमगशाखास्वलम्बयत् ॥"

जीवपुरुषयोरिति। जीवः जीवन्नित्यर्थः। णमुल्प्रकृतिधातुनिरूपितं च कर्तृत्वं, तद्विवृणोति— जीवन्नेव नश्यतीति। मरणशङ्कालवमपि विना नश्यतीति यावत्। तदाह — अतर्कितो म्रियत इति। भृत्यो भूत्वेति। प्रेष्यो भूत्वेति काशिका। कर्त्रोरिति किम्। जीवेन नश्यति, पुरुषेण वहति। णमुल्सामान्यमेव व्युत्पत्त्यन्तरेणान्यथासिद्धं वदतां मतमुपन्यस्यति

क्रियाविशेषणीभूतो बहुव्रीहिर्घञा सह ।
णमुला तुल्यरूपः स्यादिति प्राह हरः क्वचित् ॥

क्रियाविशेषणेनैव सिद्धेः केचिण्णमुल्प्रकरणं नारभन्त इति शृङ्गारप्रकाशेऽप्युक्तम् । तेन पश्चाज्जन्मनोऽपि नाशो यथा स्यात् तथा नष्टो जन्मनाशं नष्टः । तुण्डघातमयुध्यत इत्यादि ॥

ऊर्ध्वे शुषिपूरोः (३. ४. ४४)

कर्तर्यूर्ध्वशब्दे पूर्वेऽनयोर्णमुल् ॥

ऊर्ध्वः सन् शुष्यतीत्यूर्ध्वशोषं शुष्यति पादपः ।
ऊर्ध्वः सन् पूर्यते कुम्भ ऊर्ध्वपूरं प्रपूर्यते ॥

पूरेः श्यनि रूपम् ॥

उपमाने कर्मणि च (३. ४. ४५)

कर्मभूते कर्तृभूते चोपमाने पूर्वे धातोर्णमुल् ।

---

कारिकया — क्रियाविशेषणीभूत इति । क्रियाया विशेषणं क्रियाविशेषणम् । जीवस्य नाशः यस्मिन् कर्मणीति जीवनाशम् । अथवा जीवः (जीवन्) नाशः (नश्यति) यस्मिन्निति कर्तरि बहुलं घञ् । क्रियाविशेषणत्वाद् अमन्तत्वं नपुंसकेन वृद्ध्यादि च घञो ञित्त्वेनेति प्रक्रियाकार्यसिद्धिरित्याशयः । एवं क्रियाविशेषणत्वेन णमुलं साधयतामन्यदपीष्टमवशिष्टं सिध्यतीत्याह — तेनेत्यादिना ।

"जीवनाशमिमा मा स्म नश्यन्निति सदैक्षत ।
वनेचरीः स माहेयीर्मुनीनामग्निहोत्रिणाम् ॥"

सुभद्रा ॥ ऊर्ध्वस्य कर्तृत्वं विशेष्यभूतपादपाभिन्नतयेति व्यञ्जयन् विवृणोति— ऊर्ध्वः सन्नित्यादिकारिकया । ऊर्ध्वत्वमेवानन्तरविशेषणतया शोषे प्रधानमिति सम्पूर्णकर्तृत्वं तत्रोपचरितं वेद्यम् । श्यनीति । कर्तृत्वविशदीकरणायेदम् । अन्यत् सर्वं पादप इव कुम्भेऽपि तुल्यम् ।

"ऊर्ध्वशोषं नगान् शुष्कानन्विष्योन्मूल्य चालयन् ।
पार्थः पुरुषवाहं स्म वहत्येधर्धये स तान् ॥"

इति सुभद्रा ॥ कर्मणि चेति । चकारः कर्तारमपि सङ्ग्रहीतुम् । तदाह—कर्तृभूते

इक्षुभञ्जं बभञ्जासौ गजभञ्जं बभञ्ज तम् ।
अत्र हीक्षुमिवेत्यर्थस्तथा गज इवेत्यपि ॥

कषादिर्गतः ॥

उपदंशस्तृतीयायाम् (३. ४. ४७)

तृतीयान्त उपपदेऽस्माण्णमुल् ॥

तृतीयाप्रभृतीन्यन्यतरस्याम् (२. २. २१)

उपदंशस्तृतीयायामित्याद्युक्तान्युपपदान्यमन्तेन वा समस्यन्ते । आम्रोपदंशं भुङ्क्ते । आम्रेणोपदंशम् । इतः परं क्त्वापि सर्वत्रेष्टः । आम्रेणोपदश्य भुङ्क्ते ॥

हिंसार्थानां च समानकर्मकाणाम् (३. ४. ४८)

उत्तरक्रिययैककर्मकाणां प्राण्युपघातार्थधातूनां तृतीयान्तयोगे णमुल् । दण्डताडं दण्डघातं वा गामानयति । दण्डेन ताडं वा ।

---

चेति । सूत्रोपात्तक्रमेणोदाहरणायोपक्रमते.— इक्षुभञ्जमिति कारिकया । कषादिर्गत इति । इत उपरिष्टादनुप्रयोगो नास्ति, पौर्वकाल्यमस्ति चेति यावत् ॥

उपदंशस्तृतीयायाम् । उपदंश इति उपोपसृष्टदंशेः पञ्चमी । तदाह— अस्मादिति । उपदंशो नाम भोजने करणभूत उपदंशनकर्म आम्रादिः । प्रधानक्रियानिरूपितं शाब्दं करणत्वमादाय तृतीया ॥ क्त्वापीति । अयमर्थो वासरूपविधिना साधितः काशिकायाम् । इदं प्रधानक्रियानिरूपिते करणत्वे आम्रत्यपि । वस्तुतः पूर्वकालक्रियानिरूपिते कर्मत्वे तु स्वारसिक एव क्त्वा सम्मतः । तदाह दण्डनाथो भोजवृत्तौ —"यदा त्ववयवक्रियापेक्षया पूर्वकालविवक्षायां क्त्वा क्रियते तदा क्रियाभेदात् सम्बन्धभेदे द्वितीया भवति । मूलकमुपदश्य भुङ्क्ते इती'ति ।

"तर्पयित्वेप्सितैरन्नैर्बुभुक्षून् स सदातिथीन् ।
फलोपदंशं मूलानि स्वादयामास कानिचित् ॥"

इति सुभद्रा ॥ उत्तरक्रिययेति । अनुप्रयोगधात्वर्थक्रिययेति यावत् ।

---

१. 'तः क्त्वा' ग. पाठः.

खड्गलावं रिपुं मारयति । खड्गेन लावं वा । भिन्नकर्मके न । भृत्यान् खड्गेन लूत्वा रिपुं बध्नाति ॥

सप्तम्यां चोपपीडरुधकर्षः (३. ४. ४९)

उपपूर्वेभ्यः एभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् । कण्ठोपपीडं गृह्णाति । व्रजोपरोधं गां दोग्धि । पात्रोपकर्षम् अपूपान् भुङ्क्ते । असमासे कण्ठे उपपीडम् । व्रजे उपरोधम् । पात्रे उपकर्षम् । तृतीयान्ते कुचोपपीडं श्लिष्यति । सेनोपरोधं रिपुं हन्ति । करोपकर्षम् उत्थापयति । असमासे कुचाभ्यां सेनया करेणेति । 'धनुर्मुष्टिपीडं दधान' इत्युपशब्दं विनाप्याह भट्टिः, 'हस्तरोधं दधद् धनुरि'ति च । एषु क्त्वाप्यूह्यः ॥

समासत्तौ (३. ४. ५०)

सन्निकर्षे द्योत्ये सप्तमीतृतीययोः उपपदयोः णमुल् । केशग्राहं युध्येते । केशेषु ग्राहम् । करग्राहं करेण ग्राहम् । तथा सन्निकृष्टावित्यर्थः ॥

प्रमाणे च (३. ४. ५१)

---

"बाणघातं पृथासूनुस्तं निन्ये यमक्षयम् ।"

इति सुभद्रा ॥ उपपूर्वेभ्य इति । उपशब्दः प्रत्येकमभिसम्बध्यत इति काशिका । कण्ठोपपीडमित्यादि । 'तृतीयाप्रभृती'त्यत्रत्यप्रभृतिग्रहणप्रयोजनमिदम् । कर्ष इति शपा निर्देशात् कृषेस्तौदादिकान्नेति दण्डनाथः । 'कर्षतेरिदं ग्रहणं न कृषतेरि'ति काशिका च । ततो हलेनोपकृष्य वपतीत्यादौ विलेखनार्थस्य न । उपेत्यंशः प्रायिक इति ध्वनयन् भट्टिवचनं प्रमाणयति — धनुर्मुष्टिपीडमित्यादि ।

"बाहूपपीडमाश्लिष्य रसातलमनीयत"

इति सुभद्रा ॥

"स्तनोपपीडं परिरेभिरे शनैः ।"

इति कवयः । क्त्वाप्यूह्य इति । वासरूपविधिनेत्यादिः ॥ सन्निकृष्टावित्यर्थ इति । युद्धसंरम्भादित्यादिः ॥ प्रमाणे चेति । 'प्रमाणमायामः दैर्घ्यमि'ति

अस्मिन् द्योत्ये तृतीयासप्तम्योरुपपदयोः णमुल् । प्रादेशोत्कर्षं समिधं छिनत्ति । प्रादेश इति प्रादेशेनेति वा । तत्परिच्छिन्नतया छिनत्तीत्यर्थः ॥

## अपादाने परीप्सायाम् (३. ४. ५२)

अस्मिन्नुपपदे त्वरायां द्योत्यायां णमुल् । हर्म्यावपातं युध्यते । हर्म्यादवपातम् । त्वरावशेन हर्म्यादवपत्यैव, नत्ववरुह्य । एवं शय्योत्थायं गतः । त्वरया कार्यान्तराण्यकृत्वेत्यर्थः ॥

## द्वितीयायां च (३. ४. ५३)

द्वितीयान्ते चोपपदे त्वरायां गम्यायां णमुल् । लोष्टग्राहं दण्डग्राहं वा युध्यते । लोष्टानि ग्राहं दण्डं ग्राहं वा । त्वरावशादायुधाद्यगृहीत्वेत्यर्थः । स्वाहाकारं हुतं हविरिति स्वाहान्त एव होतव्यमिति त्वरा ॥

गोत्राभिधायं सलिलं दत्तमित्यत्र शङ्करः ।
त्वरां विना द्वितीयायां चेत्यमुं णमुलं जगौ ॥

अनर्घराघवाद्याङ्के स्वाहाकारमितीह च ।
पञ्जिकापि तथैवाह न जाने महतां मतिम् ॥

---

काशिका ॥ त्वरायामिति । परीप्सायामित्यस्य विवरणमिदम् । शय्योत्थायमिति । तथाच सुभद्राहरणे —

"शय्योत्थायं निश्चापायें गाङ्गं जलमगाहत ।"

कार्यान्तराणीति । मुखप्रक्षालनप्रातराशग्रहणादीनीति यावत् । परीप्सायामिति किम् । आसनादुत्थाय गच्छति ॥ द्वितीयायां च । इह परीप्सायामित्यनुवर्तते नेति च पक्षद्वयमवलम्ब्याननुवृत्तिपक्षे शङ्करं प्रमाणयन् कारिकया फलं वदति — गोत्राभिधायमित्यादि । गोत्राभिधाने स्वभावतस्त्वरा न सम्भवतीति स्पष्टमिदमत्वरायामुदाहरणम् । पञ्जिका अनर्घराघवव्याख्या ॥

स्वाङ्गेऽध्रुवे (३. ४. ५४)

छिन्ने यस्मिन् मृतिर्न स्यात् जन्तोस्तत् स्वाङ्गमध्रुवम् ।
तस्मिन् कर्मण्युपपदे णमुल् भ्रूक्षेपमाह सा ॥

भ्रुवौ क्षेपमिति वा । ध्रुवाङ्गे णमुल् न । शिरः प्रोत्कम्प्याह ।

परिक्लिश्यमाने च (३. ४. ५५)

परितः पीड्यमानेऽङ्गे ध्रुवेऽप्युपपदे णमुल् ।
मूर्धपेषं नियुध्यन्ते मूर्धानं पेषमित्यपि ॥

विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः (३. ४. ५६)

पदार्थेषु क्रियाव्याप्तिर्व्याप्यमानत्वमिष्यते ।
पौनःपुन्यं क्रियाया यत् तदेवासेव्यमानता ॥

तयोर्द्योत्ययोर्द्वितीयान्त उपपदे विश्यादीनां णमुल् स्यात् । गेहानुप्रवेशं चरति । सर्वगेहान्यनुप्रविश्येति वा, गेहं पुनः पुनरनुप्रविश्येति वार्थः । अत्र समासेन व्याप्तिपौनःपुन्ययोरुक्तत्वात् 'नित्यवीप्सयोः' (८-१-४) इति द्वित्वं न । असमासपक्षे तु द्वित्वं स्यात् । व्याप्तावुपपदस्य द्वित्वम् । पौनःपुन्ये क्रियायाः । गेहं गेहं प्रवेशं

---

स्वाङ्ग इति । अद्रवं मूर्तिमच्च स्वाङ्गम् । अध्रुवत्वनिरूपणपुरस्सरं कारिकयोदाहरति — छिन्ने यस्मिन्नित्यादिना ॥ परिक्लिश्यमाने चेति । इहाध्रुव इति न सम्बध्यत इति विशदयन् कारिकयोदाहरति — परितः पीड्यमान इत्यादिना । ध्रुवार्थोऽयमारम्भ इति दण्डनाथः ।

"उरोविदारं प्रतिचस्करे नखैः ।"

इति माघः ॥ व्याप्यमानत्वमासेव्यमानत्वं च विशदयति कारिकया—पदार्थेष्वित्यादिना । तत्र व्याप्यमानत्वं पदार्थेषु, आसेव्यमानत्वं क्रियायामिति विवेकः । व्याप्तावुपपदस्येति । पदार्थविषयत्वाद् व्याप्तेस्तद्वाचकतोपपद्येत । द्वित्वं, युक्तमिति भावः । आभीक्ष्ण्ये णमुलि सिद्धे पुनरासेव्यमानतायां तद्वचनं द्वितीयान्तस्योपपदत्वेन पाक्षिकं समासं सम्पादयितुमिति बोध्यम् ।

चरति । गेहं प्रवेशं प्रवेशं चरति इति । एवं गेहानुपातं गेहानुपातं गेहावस्कन्दमित्याद्यूह्यम् ॥

अस्यतितृषोः क्रियान्तरे कालेषु (३. ४. ५७)

द्वितीयान्ते काल उपपदे क्रियाव्यवधानार्थादसेस्तृषेश्च णमुल् । मासात्यासं भुङ्क्ते । द्व्यहतर्षं पिबति पाययति वा । मासमत्यासं द्व्यहं तर्षमित्यपि ॥

नाम्न्यादिशिग्रहोः (३. ४. ५८)

नामादेशमाचष्टे । नामग्राहमाह्वयति । नामान्यादेशम् ॥

अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ [ (३. ४. ५९)

---

"द्युसिन्धुतीर्थावस्कन्दं स्नात्वा तत्र वसन्नसौ ।
हिमालयगुहावेशमध्यास्त सुशिलासनम् ॥"
सोऽपचित्य सुपुष्पौघमनुपातं लतां लताम् ।
मुनीनां पादमापादं नम्रोऽभिवदसेवत ॥"

सुभद्रा ॥ क्रियाव्यवधानार्थादिति । क्रियामन्तरयतीति व्युत्पत्त्या क्रियाव्यवधायकत्वं काशिकायां निरूपितम् । क्रियाव्यवधानार्थत्वं चास्यतेः सोपसर्गस्यैव सम्भवीत्युदाहरति — मासात्यासमिति । कालेष्विति किम् । अध्वकर्मसु मा भूत् । योजनमत्यस्य गाः पाययतीत्येव, न योजनात्यासमित्यपि । क्रियान्तर इति किम् । अहरत्यस्येषून् गतः । इह गतिर्न व्यवधीयते इति काशिका ॥ नाम्न्यादिशिग्रहोः —

"स नामग्राहमाहूय मुनिभिः स्वकुमारवत् ।
नियुक्तस्तानतन्द्रालुरप्रीणात् स्वसपर्यया ॥
पृच्छन्तीभ्यः स्वकान्ताभ्यो नानादेशमकीर्तयत् ।"

इति सुभद्रा ॥ अयथाभिप्रेताख्यान इति । यदुच्चैः प्रियं नीचैश्चाप्रियमाख्येयं, तयोर्वैपरीत्येऽयथाभिप्रेताख्यानम् । सर्वश्राव्यायां कृष्णकथायामुच्चैराख्येयायां शनैर्वचनमसर्वश्राव्ये च शनैराख्येये प्रियावाक्य उच्चैर्वचनं चोदाहरणे । अय-

यथथा वक्तुमिष्टं तस्यान्यथोक्तावव्ययोपपदात् कृञ एतौ स्तः । णमुलि वा समासः ॥

क्त्वा च (२. २. २२)

तृतीयाप्रभृतिमध्यविहितं क्त्वान्तेन चोप(प)दं वा समस्यते । समासे ल्यप् ।

सर्वश्राव्यां कृष्णकथां शनैःकारं ब्रवीषि किम् ।
मूढ! गूढं प्रियावाक्यमुच्चैःकृत्य ब्रवीषि किम् ॥

असमासे शनैः कारं उच्चैः कृत्वा ॥

तिर्यच्यपवर्गे (३. २. ६०)

समाप्त्यर्थतिर्यक्शब्दयोगे कृञः क्त्वाणमुलौ स्तः । द्वयोर्वा समासः । तिर्यक्कारं तिर्यग्वा कारम् । तिर्यक्कृत्य तिर्यक् कृत्वा ॥

स्वाङ्गे तस्प्रत्यये कृभ्वोः (३. ४. ६१)

तस्प्रत्ययान्ते स्वाङ्गे उपपदे कृभ्वोरुभौ स्तः ॥

सा मालां करतःकारं मुखतोभावमागता ।
तां पत्युर्गलतःकृत्य पार्श्वतोभूय च स्थिता ॥

---

थाभिप्रेताख्यानं श्रोतृदिशा । तस्मात् श्रोतृवाक्यमुदाहरणम् । तत्सर्वं मनसिकृत्योदाहरणं कारिकयाह—सर्वश्राव्यामित्यादिना । सिद्धेऽपि तृतीयाप्रभृतिमध्यगतत्वेन 'क्त्वा चे'ति समासलाभायेह क्त्वा सप्रयोजनः । 'णमुलधिकारे पुनर्णमुल्ग्रहणं तुल्यकक्षत्वज्ञापनार्थम् । तेनोत्तरत्र द्वयोरप्यनुवृत्तिर्भविष्यती'ति वृत्तिः ॥

"सोऽवदन्मदनार्तां किमुच्चैःकारं ब्रवीषि माम् ।
शृणुयुर्मुनयः केचिदिह संवादमावयोः ॥"

सुभद्रा ॥ अपवर्गः फलप्राप्तिः । फलप्राप्तिपर्यन्तं कृत्वा परिसमाप्तिरतो लक्ष्यते । तदाह — समाप्त्यर्थतिर्यक्शब्देति । द्वयोरिति । क्त्वाणमुलोः । तण्णमुला समासविरहे वाकारेण विच्छिद्योदाहरति—तिर्यग्वा कारमिति । इदं वृत्त्यादौ न दृश्यते ।

"तिर्यक्कारमतिक्रूरं व्रतकालमसि स्थितः ।"

इति सुभद्रा ॥

एषु सप्तम्यर्थे तसिः । असमासे करतो मालां कारं, गलतः कृत्वा ॥

### नाधार्थप्रत्यये च्व्यर्थे (३. ४. ६२)

च्व्यर्थवति नाधार्थप्रत्ययान्ते उपपदे कृभ्वोरुभौ स्तः । विनाकारम् । विनाकृत्य । विनाभावम् । विनाभूय । द्वयोरसमासे ऽप्युक्तः । अविनाभूतं विना कृत्वेति च्व्यर्थः । एवं नानाकारं नानाभावमित्यादि । धार्थे द्विधाकारम् । द्विधाकृत्य । द्विधाभावम् । द्विधाभूय । असमासश्च । एवं द्वेधाकारम् द्वैधङ्कारम् ऐकध्यङ्कारमिति ।

धमुञो डे कृतेऽप्येवं भवेदिति हरादयः ।
द्वैधङ्कारं द्वैधङ्कृत्य द्वैधम्भावमितीक्ष्यताम् ॥

द्विधा भूता द्वैधाः । असमासे द्वैधान् कारं द्वैधानि कृत्वा द्वैधानि भावमिति ॥

### तूष्णीमि भुवः (३. ४. ६३)

क्त्वाणमुलौ स्तः । तूष्णीम्भावम् । तूष्णीं च भावम् । तूष्णीम्भूय । तूष्णीं भूत्वा ॥

### अन्वच्यानुलोम्ये (३. ४. ६४)

अन्वग्भावम् । अन्वग्भूय । असमासोऽपि । अनुकूलो भूत्वेत्यर्थः ॥

इति णमुल्विधिः ॥

---

नाधार्थेति । नार्थे धार्थे चेत्यर्थः । वस्तुतस्त्वर्थग्रहणं धार्थमेव । 'विनञ्भ्यां नानाञावि'ति ना पुनरेक एव । च्व्यर्थ इति । च्व्यर्थं विशदयति — अविनाभूतमित्यादिना । धार्थप्रत्ययान्तमुदाहरति—द्विधाकारमित्यादिना । हरादय इति । डे कृतेऽपि धार्थप्रत्ययान्तत्वमक्षतमिति तदाशयः । प्रत्ययग्रहणेन हिरुक्पृथगादेर्न, च्व्यर्थवचनात् । नानाकृत्वा काष्ठानि गत इत्यादौ च न ॥ भुव इति । कृञो व्यावृत्तये भूग्रहणम् ॥ आनुलोम्य इति । आनुलोम्यम् अनुकूलत्वम् । परचित्तानुविधानमिति काशिका ।

अथाभविष्यदर्थस्तुमुन्।

## समानकर्तृकेषु तुमुन् (३. ३. १५८)

एककर्तृकेष्विच्छार्थेषु उपपदेषु धातोस्तुमुन् स्यात्। कृष्णं नन्तुमिच्छति। अस्यापि तुमुनो भावार्थत्वान्नमनमिच्छतीत्यर्थः। भिन्नकर्तृके न। शत्रुर्नमत्विति इच्छति॥

## कालसमयवेलासु तुमुन् (३. ३. १६७)

एषूपपदेषु धातोस्तुमुन् स्यात्। भोक्तुं काल इत्यादि। अन्येष्वपि कालार्थेष्विष्टम्। भोक्तुमवसरः। ल्युडादेरबाधात् भोजनस्य काल इत्याद्यपि॥

---

"मुखतोभूय तामेवं ब्रुवाणां रहसि प्रियाम्।
सस्वजे मुखतो भूत्वा स दयार्द्रोऽपि निर्दयम्॥

अन्वग्भावं परिष्वक्त्य तेनान्वग्भूय सस्वजे।
सापि तं पुरुषे मन्दे तूष्णींभूयासते स्त्रियः॥

हारयष्टिं विना कृत्य निर्दयाश्लेषखण्डिताम्।
तिलकं च विनाकृत्वा श्रमाम्बुकणिकाहतम्॥

विस्रंसितघनग्रन्थीन् नानाकारं च कुन्तलान्।
उत्कण्ठितमणिश्रोणिं द्वैधङ्कारं च मेखलाम्॥

उलूपी रमयामास ततस्तं प्राणनायकम्।
प्रययौ च तमापृच्छ्य विनाभूय कथञ्चन॥"

इति सुभद्रा॥ अभविष्यदर्थ इति। 'अव्ययकृतो भाव' इति भावमात्रार्थ इति यावत्। पूर्वसूत्रादिच्छार्थेष्वित्यनुवर्तते। एककर्तृकत्वं च तुमुन्प्रकृत्यपेक्षम्। तेनेच्छति कृष्णो रामस्य भोजनं गच्छति चेत्यादौ भोक्तुमित्यादि न॥ कालार्थेष्विष्टमिति। 'कालसमयवेलास्वि'ति बहुवचनमुपलक्षणं पर्यायान्तराणामपीति भावः। तेनावसर-सन्दर्भ-प्रस्तुतादिष्वपि भवतीत्युदाहरति — भोक्तुमवसर इति। ल्युडादेरबाधादिति। वासरूपेणेति यावत्। 'कालः पचति

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्
(३. ४. ६५)

शकादिधातुष्वस्त्यर्थेषु चोपपदेषु धातोः तुमुन् स्यात् ।

कर्तुं शक्नोषि धृष्णोषि वक्तुं जानासि मानितुम् ।
न ग्लायसि रिपून् हन्तुं घटसे हरिमर्चितुम् ॥

आरभसे खलु योद्धुं लभसे जेतुं च रक्षितुं क्रमसे ।
उत्सहसेऽर्थं लब्धुं नार्हसि तमितुं प्रमोदितुं तेऽस्तु ॥

एवं भवतु इत्यादि । जयं लभसे, रक्षणे प्रयतसे, प्रमोदोऽस्त्वित्याद्यर्थाः । शकादिष्वप्यर्थग्रहणात् वक्तुं प्रगल्भते, वक्तुं वेत्ति, गन्तुं ताम्यतीत्याद्यप्याह दण्डनाथः ॥

पर्याप्तिवचनेष्वलमर्थेषु (३. ४. ६६)

पर्याप्तिरन्यूनता, तद्वाचिनां शक्त्यर्थत्वं पौष्कल्यार्थत्वञ्चास्ति ।

---

भूतानी'त्यादौ तु प्रेषादिग्रहणसम्बन्धमाश्रित्य तुमुन् वार्यः ॥ अस्त्यर्थेष्विति । अर्थग्रहणमस्तिनैव सम्बध्यते इति भावः । शकधृषादौ पर्यायाणामपि प्रातिस्विकतया ग्रहणमिह गमकं बोध्यम् । उदाहरणं कारिकाभ्यां विशदयति — कर्तुमित्यादिना । अभविष्यदर्थत्वेन भावार्थत्वं स्फोरयन् विवृणोति — जयं लभसे इत्यादिना । दण्डनाथ इति । शकाद्यर्थेषु धातुषूपपदेष्विति तदीयवृत्तिः ।

गतायामर्जुनस्तस्यां तपोवनमुपेयिवान् ।
शक्नुवन् धृष्णुवज्जानन्नभिराधयितुं मुनीन् ॥

निशाचरादिभिर्योद्धुमग्लायन् समरेषु सन् ।
व्याघ्रादीन् जघटे हन्तुमरण्यानीषु कामुकी ॥

महर्षयस्तमाश्रित्य यष्टुमारेभिरे मखैः ।
धनानि लेभिरे दातुं प्राक्रमन्त तपस्यितुम् ॥

---

१. 'धु,तु' ख. ग. पाठः.

तत्र शक्तिपरेषु सत्सु तुमुन् स्यात् । पर्याप्तौ भोक्तुम् । अनूनो भोक्तुम् । एवं पटुनिपुणादौ । शक्त्यर्थाभावे न । भोजने पर्याप्तमन्नम् । पुष्कलमित्यर्थः ॥

वृत्तिं तद्धरदत्तरामविवृती भाष्यादिकं कौमुदीं
तद्व्याख्यामपि धातुवृत्तियुगलं दैवञ्च कल्पद्रुमम् ।
भोजोक्तिद्वयदण्डनाथविवृती भट्ट्यादिकाव्यत्रयं
तिस्रश्चामरकोशनामविवृतीः संप्रेक्ष्य संक्षिप्यते ॥

इति श्रीमत्केरलभूवलयभूषणदेवनारायणधरणिपतिकरुणा-
शरणेन नारायणचरणपरिचरणपरायणेन नारायण-
कविना विरचिते प्रक्रियासर्वस्वे
कृत्खण्ड. ॥

---

सर्वातिथीन् भोजयितुं सेहिरे भूयसान्धसा ।
धनहीना हि नार्हन्ति सन्तोषयितुमर्थिनः ॥
बभूव द्रविणं तेषां दातुं भोक्तुं च पुष्कलम् ॥"

इति सुभद्राहरणम् ।

निपुणादाविति । आदिना अलं भोक्तुमित्यादि ग्राह्यम् । अलमर्थत्वादेव सिद्धे पूर्वसूत्रे 'शक्तिग्रहणमनलमर्थमि'ति वृत्तिः । शक्यमेवं कर्तुमित्याद्युदाहरणं तत्र विविक्तम् ॥

कृत्खण्डव्याख्यैवं सर्वस्वेऽपूरि सञ्चिकाभिख्या ।
सुधिया साम्बशिवेन स्वाधेयः संशोधनाय पूर्णफला ॥

---

शुभमस्तु ॥

# वार्त्तिकसूची।

## प्रक्रियासर्वस्वे स्मृतग्रन्थादि ।

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ३ | ... | ... | भाष्यकारः |
| ८ | ... | ... | भोजः |
| १० | 'चकाराद् व्यवसित—' | ... | वामनः |
| ,, | .... | ... | भोजः |
| ११ | .... | सुभद्राहरणम् | ... |
| १३ | ... | .... | भोजः |
| १४ | 'वाच्य ऊर्णोर्णु—' | ... | ... |
| १७ | .... | कौमुदी | ... |
| १९ | .... | ... | हरः |
| २४ | .... | ... | माधवः |
| ,, | .... | ... | हरः |
| ,, | ... | ... | स्वामी |
| २५ | ... | ... | सौनागाः |
| २६ | ... | ... | भोजः |
| ,, | .... | .... | माधवः |
| ,, | 'चोरिते मुषितं मुष्टम्' | ... | स्वामी |
| २८ | ... | ... | शङ्करः |
| ३५ | ... | ... | अमरः |
| ,, | ... | कौमुदी | .... |
| ३६ | ... | ,, | ... |
| ,, | 'आपीनतुङ्गस्तनीम्' | ... | ... |
| ३७ | .... | ... | माधवः |
| ,, | ... | प्रदीपः | ... |
| ४० | 'संशितो व्रते—' | ... | हरः |
| ४१ | 'सुविन्यवानुभ्यः—' | ... | भोजः |

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ४२ | ... | सूत्रवार्तिकभाष्याणि | ... |
| ,, | .... | ... | माधवः |
| ,, | ... | कौमुदी | ... |
| ,, | .... | ... | भोजः |
| ४८ | ... | कौमुदी | ... |
| ५० | ... | ,, | ... |
| ५१ | ... | ... | रामाद्याः |
| ,, | 'कामयानः सिद्धो —' | ... | वामनः |
| ५६ | ... | ... | माधवः |
| ,, | ... | वृत्तिः | ... |
| ,, | ... | कौमुदी | ... |
| ,, | ... | ... | माधवः |
| ५७ | 'म्लाक्षिपचिपरि—' | ... | भोजः |
| ५८ | ... | ... | भोजराट |
| ,, | ... | टीकासर्वस्वम् | ... |
| ५९ | ... | ... | माधवः |
| ,, | ... | ... | भोजः |
| ६१ | ... | ... | हरमाधवौ |
| ,, | ... | वृत्तिः | ... |
| ६४ | ... | ... | भट्टिः |
| ,, | ... | ... | भोजः |
| ,, | ... | ... | दण्डनाथः |
| ६६ | ... | कौमुदी | ... |
| ६७ | ... | ... | माधवः |
| ६८ | ... | ... | ,, |

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ६८ | 'ध्यप्योः प्रसारणं—' | भाष्यम् | ... |
| ६९ | ... | ... | माधवः |
| ,, | ... | कौमुदी | ... |
| ७० | ... | ... | रामहरौ |
| ,, | ... | ... | भोजः |
| ,, | ... | .... | माधवः |
| ७२ | ... | .... | ,, |
| ७४ | | न्यासः | ... |
| ८२ | ... | ... | वामनः |
| ,, | .... | ... | वर्धमानाचार्यः |
| ,, | ... | ... | भोजदेवः |
| ,, | .... | कौमुदी | ... |
| ,, | ... | वृत्तिः | .. |
| ,, | ... | ... | मुरारिभवभूत्यादय |
| ८३ | ... | ... | हरः |
| ८५ | ... | ... | भोजदेवः |
| ८६ | ... | ... | ,, |
| ,, | ... | ... | शङ्करः |
| ८७ | 'गुणविस्तरादय—' | .... | वामनः |
| ८९ | 'राज्ञौ वा' | ... | भोजदेवः |
| ,, | ... | ... | भट्टिः |
| ९० | ... | ... | भोजदेवः |
| ९१ | 'ओ वा' | ... | ,, |
| ९५ | .... | ... | शङ्करः |

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ९६ | 'तृणस्तम्बमर्दी—' | ... | भट्टिः |
| ९८ | ... | ... | भोजदेवः |
| १०० | 'ग्रहस्निङ्कुच—' | ... | ,, |
| १०२ | 'कीर्तिश्चस्तयश्च' | .. | ,, |
| १०४ | ... | ... | ,, |
| ,, | ... | ... | माधवः |
| १०५ | ... | ... | स्वामी |
| १०६ | ... | ... | वामनः |
| ,, | .. | टीकासर्वस्वम् | ... |
| १०७ | तारा तु नृस्त्रियोः | ... | केशवः |
| ,, | ... | ... | वामनः |
| ,, | .. | ... | रामः |
| ,, | ... | ... | स्वामी |
| ,, | .... | ... | माधवः |
| १०८ | ... | ... | ,, |
| ,, | 'श्रद् दधातौ' | ... | भोजदेवः |
| १०९ | 'अधिपर्योर्वा' | ... | ,, |
| ११० | ... | ... | ,, |
| ,, | ... | ... | माधवः |
| ११२ | 'कोऽसावनुमानः' | ... | महाभाष्यकृत् |
| ,, | ... | ... | भोजदेवः |
| ,, | 'ष्ठिवुसिवोर्दीर्घश्च' | ... | ,, |
| ,, | .. | ... | हरः |
| १२३ | ... | ... | माधवः |
| १२६ | 'समोऽपि वा' | कौमुदी | ... |
| १२७ | 'वेत्येके' | ,, | ... |

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| १२८ | 'व्यतीप अभ्युच्च' | ... | ... |
| १३१ | | ... | हरः |
| १३४ | ... | ... | माधवः |
| १३८ | 'गात्रपुरुषयोः—' | ... | भोजदेवः |
| ,, | .... | ... | हरः |
| ,, | ... | शृङ्गारप्रकाशः | ... |
| १४० | 'धनुर्मुष्टिपीडं—' 'हस्तरोधं दधद्—' | ... | भट्टिः |
| १४१ | ... | ... | शङ्करः |
| ,, | .... | अनर्घराघवम् | ... |
| ,, | ... | पञ्जिका | ... |
| १४५ | ... | ... | हरादयः |
| १४७ | ... | ... | दण्डनाथः |
| १४८ | ... | वृत्तिः | ... |
| ,, | .... | ... | हरदत्तरामौ |
| ,, | ... | भाष्यम् | .. |
| ,, | ... | कौमुदी | ... |
| ,, | ... | धातुवृत्तिः | ... |
| ,, | ... | दैवम् | ... |
| ,, | ... | कल्पद्रुमः | ... |

## प्रक्रियासर्वस्वव्याख्यायां स्मृतग्रन्थादि ।

| पृष्ठम्. | वाक्यम्. | ग्रन्थनाम. | कर्तृनाम |
|---|---|---|---|
| २ | 'कर्मकर्तरि खश् चेति—' | वार्त्तिकम् | .... |
| ३ | 'राममुच्चैरुपालब्ध —' | ... | भट्टिः |
| ,, | 'भव्यमानी सुभव्योऽपि —' | सुभद्राहरणम् | नारायणः |
| ४ | 'मृषासि त्वं हवियाजी' | ... | भट्टिः |
| ,, | 'दूनाऽग्निष्टोम —' | सुभद्राहरणम् | नारायणः |
| ,, | 'अश्वमेधयाजिनोऽभूवं —' | रावणार्जुनीयम् | .... |
| ५ | 'अन्यव्यासक्तघातित्वात्' | ... | भट्टिः |
| ,, | 'न साधुघाती —' | सुभद्राहरणम् | नारायणः |
| ,, | 'मातृघातिनोऽपि चाशुद्धि—' | रावणार्जुनीयम् | ... |
| ,, | 'ब्रह्मादिष्वेव हन्तेर्भूते —' | भाष्यम् | ... |
| ,, | 'श्रुत्युपस्थितोपपदप्रत्यय —' | शेखरम् | उपाध्यायपादाः |
| ,, | 'ब्रह्मघ्नां पापसम्मितः' | ... | भट्टिः |
| ,, | 'ब्रह्महा भ्रूणहापि वा —' | सुभद्राहरणम् | नारायणः |
| ,, | 'त्वां ब्रह्मभ्रूणहनावुपेतौ —' | रावणार्जुनीयम् | ... |
| ६ | 'अरिहयोगविचक्षणः' | ... | ... |
| ,, | 'त्रिविधश्चात्र नियम —' | काशिका | ... |
| ,, | 'पापकृत् सुकृतां मध्ये—' | ... | भट्टिः |
| ,, | 'पुरोहितैरमात्यैश्च—' | ... | नारायणः |
| ७ | 'भान्ति सोमसुतां—' | सुभद्राहरणम् | ,, |
| ,, | 'कर्मणि कुत्सिते' | भाष्यम् | .... |
| ,, | 'घृतविक्रयिणां वित्तैः—' | ... | ... |
| ,, | 'अन्येभ्योऽपि दृश्यन्त इति —' | काशिका | ... |
| ,, | 'विश्वदृश्वनयना वरं—' | ... | श्रीहर्षः |
| ९ | 'स भूते भवति यस्य —' | वृत्तिः | ... |
| ,, | 'यथानयोस्तुल्यार्थता —' | ,, | .... |
| ,, | 'प्रोपाभ्यां प्रारम्भ इत्येव—' | काशिकाव्याख्या | ... |

